1·5 – A/m

NAVANITA GRANTHARATNAMĀLĀ—No. 3

# THE TARKASANGRAHA

of

Annambhaṭṭa

with

the Commentary

SAKTISAÑJIVINI

of

Vaidyavācaspati

PANDIT P. S. RAMA ŚARMA, Karur

EDITED

WITH

A ṬIPPAṆI

BY

SANKARANARAYANAN, M.A., Nyāya Śiromaṇī
Asst. Suptd. for Epigraphy,
MYSORE

A. S. Aravamuda

POONA
1967

<u>**OTHER IMPORTANT BOOKS OF THE SERIES**</u>

1. *Bhāmatīvivaraṇa*
2. *Śrī-Subrahmaṇyakarṇāmṛita* with *Ṭippaṇī*

*For Copies please, apply to :—*

**Pandit P. S. Rama Sarma,**
**Śri Śaktivilasa Vaidyaśala,**
**KARUR (S. Ry.)**

**PRINTED BY :**
**S. R. Sardesai, B.A., LL.B., Veda-Vidya Mudranalaya,**
**41, Budhwar Peth, Poona 2.**

**PUBLISHED BY :**
**Dr. P. S. Narayanan,**
**Śri Śaktivilasa Vaidyasala, Karur.**



ॐ

# ॥ तर्कसंग्रहः ॥

श्रीविद्वदन्नंभट्टविरचितः

वैद्यवाचस्पति-पण्डित-श्री. प. सु. रामशर्मणा विरचितया

## शक्तिसंजीविन्या
## सहितः

श्री. शङ्करनारायणशास्त्रिणा ( एम्. ए.; )
न्यायशिरोमणिना परिशोधितः
स्वकीयटिप्पण्यादिभिः
समलङ्कृतश्च

नवनीतग्रन्थरत्नमालायाः मुद्रिते रत्नान्तरे—

१. भामतीविवरणम्

२. श्रीसुब्रह्मण्यकर्णामृतम्, सटिप्पणम्

प्राप्तिस्थानम् —
पण्डित पि. एस्. रामशर्मा,
श्रीशक्तिविलासवैद्यशाला, करूर ( दक्षिण रेल्वे )

मुद्रक :— स. रा. सरदेसाई, बी.ए., एल्एल्.बी.
वेद-विद्या मुद्रणालय, ४१. बुधवार पेठ, पुणें २.
प्रकाशक :—डॉ. प. सु. नारायणन
श्रीशक्तिविलासवैद्यशाला, करूर ( द. रे. )

## विषयसूचिका

॥ श्रीः ॥




## श्रीजगद्गुरुकाञ्चीकामकोटिपीठाधीशानां श्रीमुखम्

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य – श्रीमच्छङ्करभगवत्पादप्रतिष्ठित-श्रीकाञ्ची – कामकोटिपीठाधिप – जगद्गुरु – श्रीमच्चन्द्रशेखरेन्द्रसरस्वती – श्रीपादादेशानुसारेण श्रीमज्जयेन्द्रसरस्वती–श्रीपादैः करूरनगरस्थाय आयुर्वेदपण्डिताय श्रीरामशर्मणे क्रियते नारायणस्मृतिः । " काणादं पाणिनीयं च सर्वशास्त्रोपकारकम् " इति प्रमाणमनुसृत्य सर्वशास्त्रोपकारिणः आन्वीक्षकी विद्येति प्रथितस्य न्यायशास्त्रस्य समीचीनव्युत्पत्तिं बालेषु संपादनाय भवता विरचिता शक्तिसंजीविनीनाम्नी अन्नंभट्टीयतर्कसंग्रहव्याख्या तत्तत्स्थलेषु चिन्तामणि-दीधिति-गादाधर्यादिनव्यन्यायग्रन्थरीत्या विषयान् विवृण्वती न्यायशास्त्रपठनोद्युक्तानां दृढव्युत्पत्तिदायिनी मण्यादिवादग्रन्थपठनाधिकारिता-संपादनोपयोगिनी च भवतः न्यायशास्त्रे समीचीनं ज्ञानं विशदयति ।

अस्य ग्रन्थस्य शास्त्रव्युत्पित्सुषु सुप्रचारो भूयादित्याशास्महे ।

यात्रास्थानम्
तोल्लुमूर् ग्रामः } नारायणस्मृतिः

पराभववैशाखबहुलसप्तमी

शास्त्ररत्नाकर-पण्डितराज-पद्मभूषणादि विरुदावलीभूषितानां
महाश्रीश्रीराजेश्वरशास्त्रिवर्याणाम्

## आमुखम्

॥ श्रीगुरुःशरणम् ॥

दक्षिणदेशे सुप्रसिद्धैर्वैयाकरैः श्रीरामशर्ममहोदयैर्निर्मिता तर्कसंग्रहटीका अस्मद्दृष्टिपथं गता। वर्तमानो न्यायभाष्यादिरचयावत्प्रणीतग्रन्थरूपो न्यायविस्तरः समुपलभ्यमानो बुद्धोत्तरकालीन इति प्राचीनतमानां न्यायसूत्र-कणादसूत्र-प्रभृतीनामनेशाश्रयनेन न्याय-शास्त्रस्य बुद्धात्पूर्वभाविपरम्परागततरं साधनीयं भवति। न्यायसूत्रेषु "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्" इत्यनेन बुद्धकालेऽपि प्रस्तुतप्रामाण्यस्यायुर्वेदस्य बलेनैवाग्रे न्यायवैशेषिकशास्त्रयोरुज्जीवनं समभूत्। चरकसुश्रुतादिग्रन्थेषु कणादन्यायमतयोर्विस्तरेण वर्णनमाधारीकृत्य परम्परां चानुसृत्य न्यायशास्त्रस्य निर्माणमस्तीति हि—

काणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये।

इत्यादितर्कसंग्रहपद्यादप्यनुमीयते। तत्र भगवत कौटिल्येन विद्योद्देशप्रकरणे प्रामाण्य-त्वेन स्थापिताया आन्वीक्षिक्या विद्याया अग्रे उपाध्यायनिरपेक्षाटीकायां न्यायवैशेषिकादि-रूपतया वर्णनीयत्वदर्शनात् "तर्कशास्त्रान्नीतिशास्त्रं नानार्थपरिबृंहितम्।" इति लक्ष्मी-नारायणसंवादोपबृंहितेन—

अष्टादशपुराणेषु मीमांसातिगरीयसी।
ततोऽपि तर्कशास्त्राणि पुराणं तेभ्य एव च॥

ततोऽपि धर्मशास्त्राणि तेभ्यो गुर्वी श्रुतिर्नृप।
ततोऽप्युपनिषच्छ्रेष्ठा गायत्री च ततोऽधिका॥

इत्यादि वह्निपुराणीयवाक्येन कणादन्यायमतयोर्वैशिष्ट्यं सम्यगेवावधार्यते।

'तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेयात्' इति न्यायसूत्रा-नुसारेण तथा प्रतिभेत्परयर्थं पूर्वं गुरुशिष्यसंवादेष्वेवावस्थिता प्रतियोगिता, अनुयोगिता, अवच्छेदकता, अवच्छेद्यता इत्यादितार्किकभाषा प्रायो लोके सामान्येनव्यवहृतत्वाद्धि-

लोपमिवोपयन्ती दृश्यते । तस्या भाषायाः पुनरुद्धरणं लोकेषु प्रचारोऽस्मिन् समये धर्मरक्षणोपयोगिनः एकमात्रकीरस्य स्थापनायात्यन्तमपेक्षितो भवितुमर्हतीति वैद्यवरैः श्रीरामशर्मभिर्वर्णाश्रमस्थापनार्थमायुर्वेदमाहात्म्यस्थापनार्थं च बद्धपरिकरैः क्रियते । तथा—

आन्वीक्षिकीत्रयीवार्ताः सतीर्विद्याः प्रचक्षते ।
सत्योऽपि हि न सत्यस्ता दण्डनीतेस्तु विभ्रमे ॥

दण्डनीतिर्यदा सम्यङ्नेतारमधितिष्ठति ।
तदा विद्याविदः शेषा विद्याः सम्यगुपासते ॥

इति नीतिसारोक्तन्यायेन त्रयीविदामितरेषां च विदुषामन्नदानादिसम्भावनया क्रियते बहुविस्तृततया कृतश्च ।

दक्षिणदेशे भगवतो हनुमतो दर्शनमिव एतेषां दर्शनं सनातनधर्मानुयायिनां माध्यमतस्थापनाय पर्यवस्यति । तथा—

बहु व्याहरतानेन न किंचिदपशब्दितम् ।

इति भगवतो रामस्योक्तिरिव तर्कसंग्रहटीकाविषये प्रामाणिक्यास्तादृशन्यायिकभाषायाः सुयोगस्तादृशो जात इत्यस्माकमपि हृदयादियमुक्तिर्निर्गच्छति । वर्णसंकरप्राये आंगल-भाषामये कलियुगे एवंविधानामायुर्वेदविदामिमानि कार्याणि आन्वीक्षिकीत्रयीविदां गौरवस्थापकानि भविष्यन्तीति निश्चयेन मन्यामहे ।

एतेषां सर्वविद्यासमुन्नतिं भगवान् परमेश्वरो विदधात्विति समाशास्महे इत्यलम् इति निवेदयति,

(ह.) श्रीराजेश्वरशास्त्री द्रविडः
२-४-६६



## प्रशस्तिः

वैद्यवाचस्पतिः पण्डित प. सु. रामशर्मा तस्य विद्यार्थिदशाया आरभ्य एतत्क्षण-पर्यन्तं प्रायेण पञ्चचत्वारिंशतं वत्सरान् अतिसन्निहिततया मम परिचितः । अयं च इतरेभ्यः स्वीयैः कैश्चिद्गुणविशेषैर्विशिष्यते इति तेषां गुणानामत्र कथनं नातीव असंगतमिति मन्ये ।

चिकित्सकानां चिकित्साशास्त्रे पाण्डित्यं यद्यपि अत्यन्तमावश्यकं, तथापि इदानीं स नियमः प्रायेण न दृश्यते एव । श्रीरामशर्मविषये तु स उपलभ्यते इति सन्नपि गुणः मया न गण्यते, तस्य उत्सर्गन्यायसिद्धत्वात् । परंतु ये चिकित्सकस्य अनावश्यकाः, न केवलमनाव-श्यकाः किंतु अश्रद्धेयाश्च, तानहमधिकरोमि । तथा हि—वैद्यवाचस्पतिः अयं श्रीरामशर्मा अधी-तवेदः शिक्षितश्च स्वपित्रैव न्यायशास्त्रे, अन्यैश्च वेदान्तादिशास्त्रेषु । स्वयं च कविः । किमे-भिरस्य चिकित्सकस्य अनपेक्षितैरनुपयोगिभिश्च गुणैः ? किंच, यथा अयोध्याधिपतिः श्रीरामः—

" नाहमर्थपरो देवि लोकमावस्तुमुत्सहे ।
विद्धि मामृषिभिस्तुल्यं केवलं धर्ममास्थितम् ॥

इत्यवोचत्, तथा अयमपि रामः नार्थपरः किंतु केवलं धर्ममास्थाय दीनानां चिकि-त्साकरणे उत्साही वर्तते । न केवलं चिकित्सयैव परंतु अर्थिभ्यः स्वशक्तिमतिक्रम्यापि स्वीयमर्थं वितरन्नुपकरोति । तथा ऋषिभिस्तुल्यं नित्यनैमित्तिकानि कर्माण्याचरति । व्रतोपवासादिभिश्च महत्तपस्तपस्यति । किमिमे चिकित्सकस्य गुणाः ? अथापि ते अस्मिन् समन्वयन्ति इति विशिष्यत एवायमितरेभ्यः ।

एवं विशिष्टोऽप्ययमपरितुष्यन्नेभिर्गुणैः इदानीं स्वकीयेनैवार्थव्ययेन स्वनिर्मितान् स्वपितृनिर्मितांश्च शास्त्रग्रन्थान् मुद्रयित्वा प्रकाशयन् विद्यादानेनापि लोकोपकारं कुर्वन्नास्ते । सवितसंजीविन्याख्यं नूतनं किमपि तर्कसंग्रहव्याख्यानं स्वोपज्ञं मुद्रयित्वा विद्वल्लोकदर्शनपथे निक्षिपतीति सर्वथा श्लाघनीयोऽयमुद्यमस्तस्य ।

यद्यपि तर्कसंग्रहः बहुभिः पूर्वैः विद्वद्भिः कृतव्याख्यान इति न नूतनस्य व्याख्याना-न्तरस्य अपेक्षा, तथापि पूर्वव्याख्यानानां पारिभाषिकशब्दसंकुलतया आधुनिकविद्यार्थिभिः दुरवबोधतया तदपेक्षितसर्वार्थाप्रतिपादकतया च, ततः सुलभम् अपेक्षितसर्वार्थप्रतिपादकं च-

नवीनं किमपि व्याख्यानमावश्यकमेव। सा चापेक्षा शक्तिसंजीविन्या पूरितेति इति मम निश्चयः, यतः अस्यां विषयप्रतिपादनरीतिः पारिभाषिकशब्दविहीना संस्कृतभाषामात्रव्युत्पन्नस्यापि नातिक्लेशेन न्यायशास्त्रव्युत्पत्तिजननसमर्था समादृता एतद्ग्रन्थकर्त्रा। एतादृशव्याख्यान-विरचनेन विदुषः विद्यार्थिनश्च सर्वथा अधमर्णीकृतवान् श्रीरामशर्मा इति तदुपास्यदेवता श्रीशिवकुमारः तस्मै दीर्घमायुः आरोग्यं, श्रेयोवृद्धिं च वितरतादिति मदीयाशंसा।

तथा, आ शैशवात् मम चिरपरिचितः संप्रदायपद्धत्या मुक्तसंदेहविपर्यासम धीत-न्यायशास्त्रः, अधीतसमग्रयजुर्वेदः, प्रोत्तीर्ण–एम्.–ए.–परीक्षः, तीक्ष्णबुद्धिः, ऊहापोह-कुशलः, प्रेक्षापूर्वं शैघ्र्येण सौष्ठवेन च स्वीकृतकार्यनिर्वहणसमर्थः न्यायशिरोमणिः भारतीय-राष्ट्रप्राचीनलेखसंशोधनसंस्थायामधिकृतः श्रीशंकरनारायणशास्त्री स्वीयटिप्पण्या शक्ति-संजीविनीव्याख्यां योजयन् तत्र आपाततः प्रतीयमानान् सिद्धान्तविरोधादीन् अपनयन् प्राच्यनव्यसिद्धान्तविशेषान् व्यक्तं विवेचयन् 'शक्तिसंजीविन्या' अपि शक्तिमाधात् इति सर्वथा प्रशंसामर्हति। योजयताच्च सर्वशक्तः सर्वेश्वरः तमुत्तरोत्तराधिकैः श्रेयोभिश्चिरकाल-मिति आशासानः,

डेक्कन् कॉलेज्
पुण्यपत्तनम्
२५-९-१९६६

विद्वज्जनविधेयः,
क. अ. शिवरामकृष्णशास्त्री
संस्कृतकोशविभागः.



॥ श्रीः ॥

# उपोद्घातः

॥ नमः शिवकुमाराय ॥

नवनीतगिरीन्द्रनित्यवासं लवलीशक्रसुतासनाथमीडे।
करसक्तमनोज्ञशक्तिहेतिं करुणार्द्रं करिवक्त्रसोदरं तम्॥

श्रीनवनीतगिरिवरविराजमानस्य भगवतः शिवकुमारस्य प्रसादेन विरचितानां संस्कृतवाङ्मयपयोनिधिनवनीतवत् सारभूतानां नवं नवं सिद्धान्तं प्रकाशयतामेतेषां ग्रन्थ-रत्नानां माला इयं नवनीतगिरीश्वरालङ्कारपदमधिरोहतीति सुसंगता इयं संज्ञा 'नवनीत-ग्रन्थरत्नमाला' इति।

अस्याश्च प्रथमं रत्नं महनीयमत्पितृचरणनिर्मितं भामतीविवरणं नाम।

द्वितीयं सुब्रह्मण्यकर्णामृतम्।

तृतीयमिदं तर्कसंग्रहव्याख्यानं शक्तिसंजीविन्याख्यम्।

इतः अन्यान्यपि मत्पितृचरणकृतानि मत्कृतानि च ग्रन्थरत्नानि बहूनि सन्ति, यानि अचिरात् मुद्रणशाणोल्लीढानि विदुषां दर्शनपथमारोक्ष्यन्ति।

अस्मिन् तर्कसंग्रहव्याख्यारचने मम प्रवृत्तेः कारणमेतत्—यदा अहं मत्पितृचरण-प्रणीतदीपिकाप्रकाशस्य मुद्रणाय प्रावर्तिषि तदा मे मनसि एवं बुद्धिः समजनि, यदि तर्कसंग्रहमधीयानानां तार्किकपरिभाषाशाब्दबोधादिप्रक्रियासु नातिक्लेशेन व्युत्पत्तिसंपादकं सरलं किमपि तर्कसंग्रहव्याख्यानं प्रथमं विलिख्यते, तदानीं तत्पठनं प्रौढव्याख्यानान्तरे तेषां प्रवेशं सुलभं कुर्यादिति। अयं च मम मनोरथः मत्पितृचरणानुग्रहेण व्याख्यानान्तर-साहाय्येन च फलित इदानीम्।

अस्मिन् व्याख्याने न किमपि नूत्नं प्रमेयजातं, पूर्वोत्तरपक्षकोटयो वा नव्याः प्रतीक्षणीयानि। किं तु इतः पूर्वतनेषु व्याख्यानेषु अनादृता काचन सुगमा प्रतिपादनरीतिः अत्र मया आदृता अध्येतॄणां विषयग्रहणक्लेशं सर्वथा दूरीकुर्यादिति दृढो मे विश्रम्भः। यदि अल्पीयांसोऽपि माणवकाः एतत्पठनेन लब्धव्युत्पत्तयो भवेयुः, तदा मम प्रयत्नः सफलः इति आत्मानं कृतार्थं मन्वीय।

अस्मत्परमाचार्याः श्रीकाञ्चीकामकोटिपीठाधीश्वराः अस्य ग्रन्थस्य श्रीमुखप्रदानेन शक्तिसंजीविनीमामन्वग्रहीषुरिति अहो! मम भाग्यम्। वस्तुतस्तु तेषामनुग्रहेणैव इयं शक्तिसंजीविनी

अन्वर्थनाम्नी संजाता इति तु परमरहस्यम् । एवमेव आगामिन्यपि काले तेषामनुग्रहपात्रं भूत्वा एतादृशे साधुकृत्ये सक्तो भूयासमिति तेषां चरणसरोजे भूयो भूयः प्रणमन् प्रार्थये ।

जगद्विख्यातयशसः पद्मविभूषणादिविरुदशतभूषणभूताः सर्वतन्त्रस्वतन्त्राः सद्गुण-पयोनिधयः रागद्वेषादिभिः सर्वथा विमुक्ताः परमधार्मिकाः ब्रह्मश्रीमन्तो राजेश्वरशास्त्रिणः मम भाग्यवशात् द्वित्रिवारं मत्संदर्शनविषयीभूता इत्यतोऽधिकपरिचयरहिता अपि, तथा कार्यशतव्यापृता अपि कृपया मदीयव्याख्यामवलोक्य अभिनन्दनपत्रं व्यतरन्निति सर्वथा अधमर्णोऽहं केवलं नमप्रणामततिभिः कृतज्ञतां निवेदयामि तेभ्यः ।

अपि च, एतन्मुद्रणविषये निरुपधिकृपया बद्धश्रद्धानां पण्डितप्रकाण्डानां परिणतप्रज्ञानां मद्गुरुवर्याणां ब्रह्मश्रीमतां शिवरामकृष्णशास्त्रिणां विषये न शक्नोमि केवलाभिर्वाग्भिः ममाधमर्णतां निवेदयितुम् । श्रीराजेश्वरशास्त्रिभिः स्वीयाभिनन्दनपत्रे यत् लिखितम् ' बहुव्याहरतानेन न किञ्चिदपशब्दितम् ' इति, तत् तेषामेव प्रशंसा, न मम इति दृढं वच्मि । किंबहुना, शब्ददोषादिवर्जितेन येनाकारेण इदानीमिदं पुस्तकं विद्वल्लोकलोचनगोचरो वर्तते स आकारः तेषां समीक्षणफलमेवेति नातिशयोक्तिः । सर्वथा तैः परवानहम् ।

तथा एतद्ग्रन्थपरिष्करण–मुद्रितपत्रसंशोधन–टिप्पणीलेखनादिकं मयि निरुपाधिस्नेहेन विरचितवते मद्गुरुपुत्राय न्यायशिरोमणये M. A. विरुदालङ्कृताय श्रीशङ्करनारायणशास्त्रिणे राजकीयप्राचीनलेखपरिशीलनविभागाधिकृताय भगवान् श्रीशिवकुमारः उत्तरोत्तराणि श्रेयांसि वितरतादिति मम आशिषः प्रयुनज्मि ।

एवमेव, गर्भपुरीस्थाङ्ग्लपाठशालासंस्कृताध्यापकाय व्याकरणवेदान्तशिरोमणये श्रीरामलिङ्गशास्त्रिणे एतत्पुस्तकलेखनमुद्रणादिकर्मणि मम अत्यन्तसाहाय्यमाचरितवते श्रीनवनीताचलाधीशः श्रीवल्लीनायकः सर्वाणि मङ्गलानि विधेयादिति आशासे ।

अन्ततः, समीचीनया मुद्रणप्रक्रियया रम्यबन्धनेन च अस्य शोभातिशयं संपादितवतां पुष्पपत्तनस्थवेदविद्यामुद्रणालयाधिकारिणां मम धन्यवादान् निवेद्य, सर्वमेतत् सर्वमङ्गलानन्दनचरणनलिनयोः समर्पयामि इति शम् ।

पण्डित, प. सु. रामशर्मा,
वैद्यवाचस्पतिः,

श्रीशक्तिविलासवैद्यशाला,
गर्भपुरी ( करूर ). २५.९.१९६६

## INTRODUCTION

There is charm in the *Tarkasaṅgraha* of Annambhaṭṭa (c. 1700 A.D.) which is being edited here with the new commentary *Śaktisañjīvinī*. None can deny it. The beginners (*bālas*) who are desirous of getting themselves acquainted with the fundamentals of the *Tarkaśāstra* (i.e.) the composite school of Kaṇāda and Nyāya, are very much attracted towards this work by its simplicity, clarity and accuracy. They do get benefited by its reading. Indeed it is this very result our author Annambhaṭṭa has aimed at, as he himself states in the colophon. However just like all the other charming things of the world, the *Tarkasaṅgraha* too, besides its attractive side, has its own hidden and obscure side. It is attractive because of its striking simplicity. At the same time it is obscure because of its remarkable brevity. Moreover the author scrupulously refrains from elucidating the much disputed and controversial points of the *Śāstra*. Naturally, therefore, the students feel it difficult to understand him fully and consequently they think that Annambhaṭṭa is at times inconsistent and goes against the established conclusions of the *Śāstra*. However this obscure side of the *Tarkasaṅgraha* is nothing when compared with its attractive side, and it is why this work had been, and still continues to be, very popular. One can easily comprehend the extent of its popularity from the number of commentaries—about thirty as far as I know—that had accumulated around it since the day of its birth.

Annambhaṭṭa himself, having witnessed this popularity o[illegible] his *Tarkasaṅgraha*, wanted, as it were, to extricate the student[illegible] from their confusions and misconceptions. Therefore he wro[illegible] a commentary on it. He named the commentary as *Tark*[illegible] *saṅgraha-Dīpikā*, "the torch or lamp that sheds light on (th[illegible] hidden points of) the *Tarkasaṅgraha*". However, because [illegible] the author's love for brevity, this *Dīpikā*, instead of being a co[illegible] mentary, has attained a status of more or less a revised and e[illegible] larged second edition of the original. Therefore scholars, n[illegible] being content with the explanations given in the *Dīpikā*, ha[illegible] written commentaries after commentaries on the *Tarkasaṅgra*[illegible]

Even those who commented upon the *Dīpikā* try to explain the original also.[1] Of these commentaries many, like the one by Paṭṭābhirāma Śāstri are of a very high standard and can be studied only by mature students, while some others do not help at all the beginners in understanding the real import of the text. The traditional *śābdabodha* method of teaching the work, though very thorough, is a frightening one, and has now almost gone out of use. Consequently the majority of the modern students have developed a sort of fear and even a hatred towards the Tarkaśāstra itself. And when they are taught this rich *śastra* they feel like the children (*bālas*) affected by the liver-complaint do when they are given rich food.

What is the remedy for it? The only possible remedy is to simplify the subject by way of easy explanations that may allay the students' fear, increase their capacity to digest the facts and stir up their love for the *śāstra*. This stupendous task has been undertaken now by *Vaidyavāchaspati* Dr. P. S. Ramasarma of Karur (Tiruchirapalli District, Madras State). Dr. Sarma is a successful Ayurvedic doctor and has reached the peak of his fame by inventing the popular and effective medicine known as *Śakti sañjīvi* to cure all varieties of the liver trouble of children. It is quite becoming of him to try to cure the *Tārkika-bālas* also of their spleen-trouble in the form of fear, by writing the present commentary on the *Tarkasaṅgraha* viz., *Śaktisañjīvinī* an elixir to increase the power of digesting the facts and principles of the *śāstra*".

Dr. Ramasarma is a good student of the *Krishna Yajurveda*, *Āyurveda*, *Sāhitya*, *Nyāya* and *Vedānta*. Though the chief of the doctors of the *Śaktivilāsa Vaidyaśālā* which he founded nearly three decades ago, he is an *āchāra-śīla* and is a constant meditator on the lotus-feet of god Skanda-Kārttikeya. In the whole of Trichy and its adjacent districts he is known well as a generous and kind-hearted doctor. He is the eldest of the sons of the late Brahmaśrī Subrahmanya Sastriar of Panamanna village (Kerala

1. A parellel instance may be found in the case of Bhattoji Dikshita's Siddhāntakaumudi which is also noted for its brevity. In this case also, in spite of the author's own explanations in his commentary *Prauḍhamanorama*, scholars, like Nāgeśa etc. have written their own commentaries.



State) who was a *śāstrajña* of the high order and who had contributed books of very serious nature in fields of *Advaita-Vedānta*, *Nyāya*, *Sāṅkhya*, *Yoga*, *Vyākaraṇa* and *Dharmaśāstra*.[1] Dr. Sarma studied *Nyāyaśāstra* at the feet of his father. He must have realised that the famous grammarian Nāreśa-bhaṭṭa, the author of *Śabdenduśekhara*, is not the only writer to view his works as his sons and daughters,[2] and that Sastriar too like almost all other authors viewed and loved. To me Dr. Sarma, therefore, seems to take his father's works for his brothers. So the *pitṛbhakti* (i.e. devotion to one's own father) and the *bhrātrivātsalya* (i.e. brotherly love) in the doctor must have induced him to publish and popularise these brothers viz. the books of his father, by starting the series called *Navanītagranthararatnamālā*. The first book of this series is the *Bhāmatī-Vivaraṇa*, a commentary written by his father on the famous *Bhāmatī* of Vāchaspati miśra. The next book of him to be published in the series is the *Dīpikā-Prakāśa*, an exhaustive commentary on the *Tarkasaṅgraha-Dīpikā* of Annambhaṭṭa. It is hoped that it will be printed off before long. Now Dr. Sarma offers his own *Śaktisañjīvinī* to the students of Nyāya with a hope that it will rouse their interest for the subject and keep them prepared to receive the above mentioned *Dīpikā-Prakāśa*. It is, in short, the aim and purpose of Dr. Sarma's *Śaktisañjīvinī*.

Regarding the *Ṭippaṇī* and *pariśishṭa* published along with the *Śaktisañjīvinī*, I beg the indulgence of the scholars to say a few words. When Dr. Sarma prepared the first copy of the manuscript of his book and sent it to me for my study and comments, I wrote a series of notes on different points dealt with therein, and I sent the same to Dr. Sarma hoping that he would incorporate them in his work itself. But he has proved to be an altogether different type of man. He wanted me to edit his *Śaktisañjīvinī* along with my notes in the form of a *Ṭippaṇī*.

1. For a list of works written by this sholar see *The Navanītagranthararatnamālā*, No. 1 (*Bhāmatī-Vivaraṇa*) Introd. p. 5.

2. Cf. *Śabdenduśekharaḥ putro Mañjūshā chaiva kanyakā |*
*sva-matau samyagutpādya Śivayorarpitau mayā |*
(*Laghuśabdenduśekhara*, colophon, verse 1).

I thank him for that. In this connection the following verse of Bhagavān Vālmīki comes to my mind:—

*Dadyān = na pratigṛihṇīyān = na*
*brūyāt = kiñchid = apriyam|*
*api jīvita-hetor = vā*
*Rāmaḥ satyaparākramaḥ|| (Vālmīki's Rāmāyaṇa V 33, 34)*

"Rama, the true hero, would always bestow on others charities and never receive anything from others, nor would he utter a bitter word (both) even for the sake of his own life".

Now I request the readers to keep in mind the fact that the *Ṭippaṇī* is not a seriously planned work and that wherever it differs from the *Śaktisañjīvinī*, it tries only to show to the students the other side of the medal. I will be amply rewarded if it proves to be of some use to the reader.

Before concluding, I pay my humble respect, with a very deep sense of gratitude to my esteemed teacher *Śāstraratnākara* Brahmaśrī K. A. Sivaramakrishna Sastriar (formerly of the Annamalai University and, at present, of the Deccan College, Poona). For, inspite of his over-crowded daily routine time-table he went through the press copy of the MS., offered very valuable suggestions, took upon himself the task of correcting the proof pages, and spared no effort to arrange for getting the book printed off in the press at Poona itself. And above all he has blessed the book with his appreciation. I am fully aware of the fact that but for his help and effort it would have been impossible to get the book published in its present form. Next my thanks are due to Brahmaśrī T. S. Rāmalinga Sastriar (Vyākarana-Vedānta Śiromaṇi), who, inspite of his pre-occupation as the Sanskrit teacher of the Municipal High School, Karur, has kindly rendered all possible help in preparing the press copy of the book.

I thank the Veda-Vidya Mudranalaya Press, Poona, for printing the book in a neat manner.

Mysore,
22nd August, 1966.

S. SANKARANARAYANAN.

# तर्कसंग्रहः

## शक्तिसंजीवनीव्याख्यासहितः

॥ श्रीः ॥

॥ श्रीगुरुभ्यो नमः ॥

# तर्कसंग्रहः

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसङ्ग्रहः ॥

॥ श्रीः ॥

नमः शिवकुमाराय ।

## शक्तिसंजीविनीव्याख्या ।

श्रीशक्तिकामवसुधावल्लभादिनिषेवितम् ।
कविं कवीनां वरदं गणनाथमुपास्महे ॥
नत्वा वल्लीदेवसेनापतिं शक्तिकराम्बुजम् ।
शक्तिसंजीविनीव्याख्या क्रियते तर्कसंग्रहे ।

तर्कादिविद्याप्रदतातपादान् कणादवात्स्यायनगौतमादीन् ।
आचार्यवर्यानखिलांश्च भक्त्या वन्दे गुणज्ञान्विदुषोऽपि नित्यम् ॥

शारदाकामकोटीशौ भगवत्पादरूपिणौ ।
चन्द्रशेखरयोगीन्द्रौ जगद्गुरुवरौ श्रये ॥
नारायणश्रीनिवासभूवराहगुरूञ्छ्रये ।
वात्सल्यभरितान्वैद्यवेदकाव्यप्रबोधकान् ॥

श्रीतातपादचरणाम्बुजचिन्तयैव नावा तदीयबहुसूक्तिसुसाधनैश्च ।
शास्त्रार्णवस्य तरणाय कृतिर्ममेयं सानुग्रहेण पवनेन पितुर्हि साध्या ॥
ताताङ्घ्रिपद्मयुगलं मुहुरन्तरङ्गे निध्याय तत्प्रवचनानि च सारवन्ति ।
विद्यार्थिनां विपुलकर्कशदुर्गतर्कमार्गेषु संचरणशक्तिमिहादधामि ॥

शास्त्रार्णवेषु संचारं कर्तुं शक्तिमभीप्सताम् ।
शक्तिसंजीविनी व्याख्या नौकेवोपकरिष्यति ॥
व्युत्पत्तिसिद्धये शास्त्रे या याः कठिनपङ्क्तयः ।
वर्तन्ते ता विहायादौ संग्रहार्थोऽवगम्यताम् ॥

गुरूणां विदुषां वापि सन्निधौ विनयेन ताः।
अवगन्तुं प्रयत्नश्च क्रियतां शास्त्रचिन्तकैः॥
कालेन शास्त्रमर्यादाः परिभाषादयः स्वयम्।
अनायासेन विद्यार्थिहृदयंगमतामियुः॥
इत्थं संप्रार्थ्य जिज्ञासूनारभे शास्त्रमुत्तमम्।
निर्मत्सरा यतध्वं मे वचसां बोधसिद्धये॥

इह खलु भगवन्तौ गौतमकणादौ दुःखपङ्कनिमग्नं निखिलभुवनम् उद्दिधीर्षू न्यायवैशेषिकशास्त्रे प्रवर्तयामासतुः। कालेन तयोर्विशेषाभावमाकलयन्तो नवीनाः शास्त्रद्वयमेकीकृत्य तर्कशास्त्रमिति नूतनं प्रस्थानमारचयामासुः। शास्त्रेऽस्मिन्मणिदीधित्यादिनवीनप्रौढनिबन्धान् पिपठिषूणामत्यन्तोपकाराय सर्वतन्त्रस्वतन्त्रोऽन्नंभट्टः शास्त्रसारभूतं तर्कसंग्रहमतिगंभीरार्थभरितमपि ललितविशदशैल्या बालानुग्रहाधीनचेता रचयित्वा महोपकारी संजज्ञे। तत्रादौ सः प्रारिप्सितप्रबन्धनिर्विघ्नपरिसमाप्तिकामः स्वेष्टदेवतानमस्कारात्मकं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नाति—निधायेति। विश्वेशम्=जगन्नियन्तारं जगद्रक्षकमिति यावत्। इदं सृष्टिसंहारयोरप्युपलक्षणम्। हृदि=मनसि। निधाय=ध्यात्वा। ननु ध्यानशब्दस्य विजातीयज्ञानानन्तरितसजातीयज्ञानपरंपरेत्यर्थकतया ध्यानस्य ज्ञानरूपतया पर्यवसानात्, न्यायमते चात्मन एव ज्ञानाधिकरणतया कथं हृदधिकरणकत्वमिति चेत्—न हि समवायसंबन्धेनात्र ज्ञानस्य हृदधिकरणकत्वं विवक्ष्यते। किन्तु स्वाश्रयसंयुक्तत्वरूपपरंपरया। स्वं ध्यानं ज्ञानरूपम्, तदाश्रयः समवायेनात्मा, तत्संयुक्तं हृदयम्। अथवा हृत्पदेनात्मैव लक्ष्यते। हृत्पदशक्यमनःसंबन्धरूपलक्षणासत्त्वात्। अथवा हृदीत्यत्र हृत्पदं मनःपरमेव। सप्तम्या जन्यत्वमर्थः। तस्य ध्यानेऽन्वयः। नन्वेवं ज्ञानमात्रस्य मनोजन्यत्वेन हृत्पदस्याव्यावर्तकतेति चेत्—न, हृत्पदस्य हृदयरूपशरीरावयवार्थकतया निपूर्वकधाधातोः वृत्तित्वप्रकारकाहार्यज्ञानपरतया सप्तम्या निरूपितत्वार्थकत्वेन च शरीरावयवरूपहृदयनिरूपितवृत्तित्वप्रकारकाहार्यज्ञानोत्तरकालिकत्वस्य कृतौ लाभात् व्यावर्तकत्वसत्त्वात्। यद्वा हृदि इति सप्तम्यर्थस्य वृत्तित्वप्रकारकत्वस्य ध्यानेऽन्वयात्, सप्तम्यर्थविषयत्वस्य अवच्छिन्नत्वस्य वा विश्वेशेऽन्वयात् विभोरपि परमेश्वरस्य "हृत्पुण्डरीकान्तरसन्निविष्ट"मिति हृदयवृत्तितया ध्यानेन



पुण्यस्मरणात् न दोषलेशावकाशः। वस्तुतस्तु "हृदि निधाये"ति समुदायस्यैव मिलित्वा ध्यानमर्थः। ल्यपा च समानकर्तृकत्वबोधनात् दीपिकायां तथैवोक्तत्वान्नात्र बहुचिन्तावकाशः। तथापि शिष्यबुद्धिवैशद्याय प्रकारभेदाः प्रदर्शिताः। गुरुवन्दनं=विद्यागुरूणां वन्दनम्। विधाय=कृत्वा। एवं पूर्वार्धेन मङ्गलमाचर्य शिष्यावधानायोत्तरार्धेन चिकीर्षितं प्रतिजानीते बालानामिति। तर्क्यन्ते प्रतिपाद्यन्ते इति तर्काः द्रव्यादिपदार्थाः। तेषां संग्रहः संक्षेपेण स्वरूपकथनम्। तच्च बहुतरार्थबोधकन्यूनसंख्याकशब्दसन्दर्भः। क्रियते इत्यन्वयः। ननु "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति न्यायादेतद्ग्रन्थविषयकप्रवृत्तिरसङ्गतेत्यत आह—सुखबोधायेति। सुखेन अनायासेन बोधायेत्यर्थः। अनेन स्वीयग्रन्थजन्यज्ञानस्य मणिदीधित्यादिबह्वायाससाध्यप्रौढनिबन्धाभ्यासजन्यज्ञानाद्विशेषः सूचितः। ननु परिणतप्रज्ञानां प्रौढग्रन्थाध्ययने को वा प्रयासः इत्यत आह—बालानामिति। द्रव्यगुणादिपदार्थानभिज्ञानां ग्रहणधारणपटूनामित्यर्थः। अतिसूक्ष्मयुक्तिकेषु प्रौढप्रबन्धेषु तेषां सुखबोधो न स्यादिति हृदयम्। बालशब्दस्यानधीततर्कशास्त्रत्वे सति अधीतकाव्यव्याकरणकोशादिमानर्थः। अत्र बालशब्दस्य स्तनन्धयार्थकत्वं तु सुतरां न संभवति। तेषां शक्तिग्रहासंभवात् इति विभावनीयम्।

केचित्तु सुखशब्देन दुःखध्वंसः उच्यते। स च मोक्षः। भारापगमे सुखी संवृत्त इतिवत् आत्यन्तिकदुःखध्वंसस्यैव सुखत्वोपगमेन सुखाय बोधायेत्यर्थकल्पनया परमपुरुषार्थमपि प्रयोजनमस्य वदन्ति[1]। अत्र मते

---

१ वदन्तीत्यस्वरसोद्भावनम्। तद्बीजं तु एतादृशचतुर्थीसमासः अप्रामाणिकः, चतुर्थीतदर्थेतिसूत्रे तादर्थ्यपदेन प्रकृतिविकृतिभावस्यैव विवक्षितत्वेन यूपाय दारु इत्यादावेव तादर्थ्यसमासाभ्युपगमात्। सुखस्य बोधः इति षष्ठी समासे तु सुखविषयकबोधस्यैवोपस्थितेः। अपि च अस्मिन्व्याख्याने बालशब्दस्य वैयर्थ्यापत्तिः। सुखशब्दस्य मुख्यार्थे संभवति गौणार्थकल्पनाया अन्याय्यत्वं च। यदि दीपिकासमाप्तौ निःश्रेयसफलवत्त्वं स्वग्रन्थस्य ग्रन्थकृतैवोपपादितम्। अतः अर्थद्वयकल्पनेनैव ग्रन्थकृदाशयः प्रकटितो भवतीति मन्येरन्, तर्हि समासान्तरेणैवोपपादनीयमिति ध्येयम्।

षडिन्द्रियाणि, षड्विषयाः, षट् बुद्धयः, शरीरम्, सुखम्, दुःखं चेत्येक-विंशतिदुःखध्वंसो मोक्ष इति हि सिद्धान्तः। एकविंशतिदुःखान्तर्गत-योर्मनःश्रवणेन्द्रिययोर्नित्यत्वेऽपि यद्रूपविशिष्टयोस्तयोर्ज्ञानद्वारा दुःखहेतुतया दुःखरूपत्वं तद्रूपनाशेन विशेष्यांशे नाश उपचर्यते शरीरी नष्ट इतिवत्। तेन नैकविंशतिदुःखध्वंसकथनासंगतिः।

प्रेक्षावत्प्रवृत्त्यंगभूतमनुबन्धचतुष्टयं चानेनोक्तं भवति। तथाहि बाला-नामित्यनेन अधिकारी, सुखबोधायेत्यनेन प्रयोजनम्, तर्केति विषयः, संग्रह इत्यनेन प्रतिपाद्यप्रतिपादकभावः संबन्धः इति। अत्र यद्यपि तर्क्यन्ते प्रतिपाद्यन्ते इति तर्काः इति व्युत्पत्तेरंगीकारेण तर्कपदेनैव विषयस्य प्रतिपाद्यप्रतिपादक-भावसंबन्धस्य च बोधः भवति, तथापि पृथक् संक्षेपेण कथनार्थकसंग्रह-पदसत्त्वात् एवं व्याख्यातमिति ध्येयम्। अनुबन्धचतुष्टयत्वं च ग्रन्थाध्ययन-प्रवृत्तिप्रयोजकज्ञानविषयत्वम्। इष्टसाधनताज्ञानं कृतिसाध्यताज्ञानं च प्रवृत्ति-जनकम्। तज्जनकज्ञानविषयत्वं च विषयादीनां विशिष्टज्ञानविधया। उक्तं च भट्टपादैः— "विना विषयसंबन्धं तथैवार्थाधिकारिणौ। अव्याख्येयो भवेद् ग्रन्थः स्याद्ग्रन्थे तच्चतुष्टयम्" इति। अत्र विश्वेश्वरध्यानमात्रेण गुरुवन्दन-मात्रेणापि वा मङ्गलाचरणसंभवे उभयाचरणं किमर्थमिति न शङ्कनीयम्।

"यस्य देवे परा भक्तिः यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥"

इति स्मरणात् गुरुवन्दनावश्यकर्तव्यतायां प्राप्तायां तन्मात्रकरणे ईश्वरा-नङ्गीकर्तृनास्तिकादिभिरपि गुरुवन्दनकरणात् तन्मतप्रवेशशङ्कानिरसनाय स्वस्य परमास्तिकतया सर्वेश्वरे भक्त्युद्रेकसूचनाय चोभयाचरणम्। वस्तुतस्तु कारणपौष्कल्यात् कार्यपौष्कल्यस्य दर्शनात् बहुतरमंगलकरणेन बहुतर-विघ्नध्वंसस्यापेक्षितत्वात् उभयाचरणम्। अत्र मङ्गलवादादयः अस्मत्पितृ-चरणरचितदीपिकाप्रकाशे निपुणमुपदर्शिताः तत एवावगन्तव्याः।

मङ्गलस्य फलविषये विवदन्ते तार्किकाः। मङ्गलं करणम्, विघ्नध्वंसः व्यापारः, समाप्तिः फलमिति प्राञ्चः। नव्यास्तु मंगलस्य विघ्नविनाश एव



फलम्। विघ्नसंशयनिश्चययोरेव तदाचरणात्[1]। समाप्तिस्तु बुद्धिप्रतिभादि-कारणकलापात्। निर्विघ्नं परिसमाप्यतामिति कामनापि नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामतीति न्यायेन स्वर्गी स्यामिति कामनावत् विशेषण-मात्रपरतया विघ्नध्वंसविषयत्वेनोपपन्ना न समाप्तिसाधनत्वव्यवस्थापिका इति वदन्ति। मंगलत्वं च स्तुत्याद्यन्यतमत्वम्[2]। स्तुतिश्चोत्कर्षवत्तया ज्ञापनम्। उत्कर्षः अधिकगुणवत्ता। तत्प्रकारकज्ञानजनको व्यापारः इत्यर्थः।

शाब्दबोधं विना अर्थनिर्णयस्यासंभवात् तत्प्रक्रियाज्ञानसंपादकं किंचिदि-होच्यते। शाब्दज्ञानलक्षणप्रमाणादिकं शब्दखण्डे स्फुटीभविष्यति। शाब्दबोधो द्विविधः खण्डशाब्दबोधोऽखण्डशाब्दबोधश्चेति। आद्यः—कुमारमानयतीत्यत्र कुमारपदात् कुमारोपस्थितिः। द्वितीयायाः कर्मत्वस्य, आङ्पूर्वकणीञ्धातोः आनयनस्य, आख्यातात् कृतेश्चोपस्थितिः। तदनन्तरं कुमारीया कर्मता, आनयनानुकूला कृतिः इति लभ्यते। एवंरूपः खण्डशाब्दबोधः। द्वितीयः— कुमारकर्मकानयनानुकूलकृतिमान् इत्याकारकः। आदौ प्रकृतिप्रत्यय-विभागेन प्रतिपदं अर्थः अवगन्तव्यः। तत्र प्रत्ययार्थे प्रकृत्यर्थः प्रायः निरूपितत्वसंबन्धेनान्वेति। प्रत्ययार्थश्च उत्तरत्र प्राय आश्रयत्वसंबन्धेनान्वेति। यथा "मयूरे स्कन्दः" इत्यत्र मयूरनिरूपिताधेयताश्रयः स्कन्दः इति। समानाधिकरणप्रयोगे विशेषणविभक्तीनाम् अभेद एवार्थः। विशेषणस्य विशेष्ये अभेदसंबन्धेनान्वये तु विशेषणविभक्तीनां निरर्थकत्वमेव। सर्वत्र प्रथमान्तपदार्थस्यैव शाब्दबोधे मुख्यविशेष्यत्वम्। भावाख्यातस्थले तु धात्वर्थमुख्यविशेष्यकबोधः। बोधे संबन्धविधया भासमानानामपि प्रकार-विधया प्रदर्शनं व्युत्पादनसौकर्याय। प्रतियोगिता, अनुयोगिता, आधेयता, अधिकरणतेत्यादयः प्रतियोग्यनुयोग्याधेयाधिकरणादिनिष्ठा धर्माः। तत्र प्रतियोगितानुयोगितयोः, विशेष्यताप्रकारतयोः, विशेष्यतासंसर्गतयोः,

१ विघ्नसंशयात् तन्निश्चयाद्वा तदाचरणात् इत्यर्थः।

२ स्तुत्यादीति। अशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखमिति त्रिविधमंगलेषु नमस्क्रियारूपं मंगलं त्रिविधं वाचिकं, मानसिकं, कायिकं चेति। तत्र वाचिकं स्तुतिः। अत उक्तं स्तुत्याद्यन्यतमत्वमिति।

प्रकारताप्रकारितयोः, विशेष्यताविशेष्यितयोः, संसर्गतासंसर्गितयोः, विषयताविषयितयोः, अवच्छेदकतावच्छिन्नतयोः इत्येवंजातीययोः मिथः सापेक्षधर्मयोः निरूप्यनिरूपकभावः। यथा प्रतियोगितानिरूपितानुयोगिता, आधेयतानिरूपिताधिकरणता, अनुयोगितानिरूपितप्रतियोगिता, अधिकरणतानिरूपिताधेयता इत्यादिः। विशेष्यिताप्रकारितयोः प्रकारितासंसर्गितयोः एवंविधयोर्धर्मयोः परस्परमवच्छेद्यावच्छेदकभावः। यथा विशेष्यितावच्छिन्ना प्रकारिता, प्रकारितावच्छिन्ना विशेष्यिता इत्येवम्।

अत्रेदं तत्त्वम्। धर्मयोरेकनिष्ठत्वे अवच्छेद्यावच्छेदकभावः। यथा प्रकारित्वं विशेष्यित्वं च ज्ञाननिष्ठं। तयोरवच्छेद्यावच्छेदकभावः। आधेयताधिकरणतादिकं तु नैवम्, भिन्ननिष्ठत्वात्। अतस्तयोर्निरूप्यनिरूपकभावः। एवं यथा आधेयतानिरूपिताधिकरणता भवति तथा आधेयनिरूपितापि भवति। अत्र आधेयमधिकरणतां प्रति निरूपकम्। एवमधिकरणनिरूपिताधेयता। अत्र आधेयतानिरूपकमधिकरणम्। धर्मधर्मिणोरत्र न परस्परं निरूप्यनिरूपकभावः। किन्तु धर्मस्य निरूपितत्वं। धर्मिणो निरूपकता। एवमाधेयतादौ आधेयनिष्ठधर्मस्यावच्छेदकता। यथा घटनिष्ठाधेयतायां घटत्वस्यावच्छेदकत्वम्। यद्धर्मपुरस्कारेणाधेयत्वादिकं गृह्यते स धर्मः तत्रावच्छेदकः। अपिच समस्तपदेषु विगृह्य अर्थाः वक्तव्याः। तत्पुरुषादिषु बुद्धिवैशद्यमात्रोपयोगिनः विग्रहार्थाः। शाब्दबोधे लक्षणयैव समासार्थस्य प्रवेशः। यत्र तु समासे न लक्षणा, तत्र समासार्थविग्रहार्थयोर्न वैलक्षण्यम्। तत्पुरुषे प्रायः पूर्वपदे लक्षणा। बहुव्रीहौ तु उत्तरपदे लक्षणा। पूर्वपदं तात्पर्यग्राहकम्। पूर्वपदस्य विग्रहे प्रत्ययान्तस्य योऽर्थः तदाश्रयपर्यन्तः तत्पुरुषे लक्षणार्थः। राजपुरुष इत्यत्र राज्ञः पुरुष इति विग्रहे राजपदस्य राजस्वत्वाश्रयपर्यन्तो लक्ष्यार्थः। तस्याभेदसंबन्धेन पुरुषे अन्वयः। बहुव्रीहौ तु समस्तपदस्य यत्पदविशेषणत्वं तत्पदार्थे अभेदान्वययोग्यो लक्ष्यार्थः। यथा "रक्ताम्बरः स्कन्दः" इत्यत्र अम्बरपदस्य रक्तरूपवदम्बरविशिष्टोऽर्थः। अधिकमन्यत्रावगन्तव्यम्।

अथ बालानामभ्यासाय ललितपद्धत्या शाब्दबोधप्रकारः प्रदर्श्यते। निधायेति। निपूर्वकधाधातोः ध्यानमर्थः। ल्यप्प्रत्ययस्योत्तरकालिकत्वम्।



हृदीति सप्तम्या अधिकरणत्वमर्थः। विश्वस्येश इति विग्रहे षष्ठ्या निरूपितत्वमर्थः। ईशशब्दस्य नियामकतावानर्थः। विश्वस्येति षष्ठ्यर्थनिरूपितत्वस्य नियामकतायां स्वरूपसंबन्धेनान्वयः। ईशमित्यत्र द्वितीयायाः कर्मत्वमर्थः। सविषयार्थकधातुसमभिव्याहृतद्वितीयाया विषयतारूपं कर्मत्वमिति। हृदीत्यत्राधिकरणत्वरूपसप्तम्यर्थस्य धात्वर्थभूतध्याने निरूपकत्वसंबन्धेनान्वयः। तथाच हृन्निष्ठाधिकरणतानिरूपकविश्वनिरूपितनियामकतावद्विषयकं यद्ध्यानं तदुत्तरकालिकेति फलितम्। विधायेत्यत्र विपूर्वकधाधातोः विधानमर्थः। ल्यपः उत्तरकालिकत्वम्। गुरूणामित्यत्र षष्ठ्याः कर्मत्वमर्थः। वन्दनमित्यत्र द्वितीयायाः विषयत्वम्। तस्य विपूर्वकधाधात्वर्थीभूतकृतौ निरूपकतासंबन्धेनान्वयः। एवंच गुरुकर्मकवन्दनविषयककृत्युत्तरकालिकेत्यायातम्। बालानामित्यत्र षष्ठ्याः समवेतत्वमर्थः। सुखबोधः अनायासपुरस्कृतपदार्थतत्त्वज्ञानम्। तस्य चतुर्थ्यर्थप्रयोजकत्वे निरूपितत्वसंबन्धेनान्वयः। तथाच बालसमवेतानायासपूर्वकबोधप्रयोजिकेति फलितम्। क्रियते इत्यत्र मयेत्यध्याहार्यम्। अस्मच्छब्दस्य अन्नंभट्टः, तृतीयायाः समवेतत्वं चार्थः। कृञ्धातोः कृतिः, आख्यातस्य वर्तमानकालिकत्वं विषयत्वं चार्थः। समवेतत्वस्य वर्तमानकालिकत्वस्य च कृतावन्वयः। कृतेर्निरूपितत्वसंबन्धेन विषयतायाम्। विषयतायाः आश्रयत्वसंबन्धेन तर्कसंग्रहे। एवंच मत्समवेतवर्तमानकालिककृतिविषयः तर्कसंग्रहः इति। खण्डशाब्दबोधोऽयमिति केचन। अस्य वृत्तिज्ञानत्वेन व्यवहारः। अखण्डशाब्दबोधप्रकारस्तु हृन्निष्ठाधिकरणतानिरूपकविश्वनिरूपितनियामकतावद्विषयकध्यानोत्तरकालिकगुरुकर्मकवन्दनविषयककृत्युत्तरकालिकबालसमवेतानायासपूर्वकपदार्थतत्त्वज्ञानप्रयोजकान्नंभट्टसमवेतवर्तमानकालिककृतिविषयः तर्कसंग्रहः इति।

**द्रव्यगुणकर्मसामान्यविशेष-**
**समवायाभावाः सप्त पदार्थाः।**

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति श्रुत्या आत्मतत्त्वदर्शने इष्टसाधनत्वावगमात् तत्र चेष्टाकांक्षायां रात्रिसत्रन्यायेन 'न

'स पुनरावर्तते' इत्युक्ता मुक्तिरेवेष्टत्वेन निश्चीयते। एवं श्रुतिवाक्यजन्यात्मविषयकशाब्दज्ञानरूपश्रवणस्य, आत्मन इतरभिन्नत्वेनानुमानरूपमननस्य विजातीय-प्रतीत्यभाव-विशिष्ट-सजातीय-प्रतीत्यनुवृत्ति-रूप-ध्यान-प्रवाहात्मकनिदिध्यासनस्य च तथैवेष्टसाधनत्वावगमात्, तत्र तादृशाकांक्षायां आत्मतत्त्वज्ञानमेव तादृशत्वेनावगम्यते। तथाचेदृशमननस्येतरपदार्थज्ञानसाध्यतया तस्य चोद्देशलक्षणपरीक्षात्मकशास्त्राधीनत्वेन तत्राप्युद्देशं विना धर्मिधीसाध्यलक्षणादेः कर्तुमशक्यत्वेन प्रथमतः पदार्थानुद्दिशति—द्रव्येति। ननु द्रव्यगुणेत्यस्य विभागवाक्यत्वेन "सामान्यवचनं पूर्वं विशेषस्य ततः परम्" इति न्यायात् सामान्यलक्षणाभिधानं विना विभागोऽनुपपन्नः। नहि पदार्थस्वरूपमजानतः कति पदार्था इति जिज्ञासा भवति। सामान्यधर्मज्ञानस्य विशेषजिज्ञासां प्रति कारणत्वादिति चेत्, सत्यम्। तथापि तर्कसंग्रह इत्यत्र तर्क्यन्ते प्रतिपाद्यन्त इति व्युत्पत्त्या प्रतिपाद्यत्वरूपसामान्यलक्षणस्य सूचितत्वेन विशेषजिज्ञासोदये विभागकरणे वा बाधकाभावात्। यद्वा अग्निहोत्रं जुहोति, यवागूं पचति इत्यादिस्थलवत् पाठक्रमादर्थक्रमस्य प्राबल्यमाश्रित्य पदार्थाः द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त इति योजना। पदार्थशब्दस्य पूर्वोपस्थितत्वेन पदस्यार्थः पदार्थः इति व्युत्पत्त्या पदाभिधेयत्वस्य, अभिधेयत्वस्य वा पदार्थसामान्यलक्षणस्य प्राप्तिसंभवः। अत्रापि पदेतिविशेषणस्य प्रयोजनाभावात् अभिधेयत्वमेव पदार्थसामान्यलक्षणम्। अर्थपदस्य "अर्थ उपयाच्ञायां इति चौरादिकात्, "ऋ गतौ" इति भौवादिकाद्वा धातोः निष्पन्नस्य अभिधेयार्थकत्वं "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु", "अर्थोऽभिधेये शब्दानाम्" इति निखण्टुप्रसिद्धम्।

यद्यप्यभावः न नामग्राहमुपदिष्टः वैशेषिकसूत्रे, तथापि विशेषपरीक्षणात् 'घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः' इति सूत्रेण मनसः इन्द्रियस्य अनुक्तावपि परीक्षकैः तस्येन्द्रियत्वस्वीकारवत् अभावस्यापि सप्तमपदार्थतांगीकारात्। अत एव प्रमाणमञ्जर्यां वैशेषिकप्रकरणे 'अभिधेयः पदार्थः। स भावाभावभेदेन द्विधा' इति विभागः कृतः। तत्रैव मनोनिरूपणे 'मूर्तत्वे सति सर्वदा स्पर्शशून्यं मनः; सुखज्ञानम् इन्द्रियजम्, अनित्यज्ञानत्वात्, रूपज्ञानवत्' इति मनसः सद्भावे इन्द्रियत्वे च प्रमाणं चोक्तम्। कुसुमाञ्जलौ च 'अतोऽभावेन सह सप्तैव पदार्थाः' इति उक्तम्। तद्व्याख्याने चोपाध्यायाः 'भावरूपपदार्थाः षट्। अभावस्यापि मानसिद्धतया पदार्थत्वोपगमादिति भावः' इति आहुः। एवं च न्यायवैशेषिकमतद्वयानुसारेण अभावस्यापि पदार्थत्वसिद्धिः इति।



ननु सप्तग्रहणं व्यर्थम्। प्रत्येकं द्रव्यादिगतैकत्वमादाय न्यूनसंख्यायाः, अनुक्तेरेवाधिकसंख्यायाश्च व्यवच्छेदसंभवादिति, चेत्, न, उद्देश्यविधेयभावस्थले असति बाधके विधेये विधेयसंसर्गे वा उद्देश्यतावच्छेदकव्यापकत्वं गृह्यत इति नियमानुरोधेन पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्यापकम् इति व्याप्तिलाभाय सप्तपदम्।

ननु शक्त्यात्मकातिरिक्तपदार्थे विद्यमाने कथं सप्तैव पदार्था इति? तथाहि—मण्यादिसंयुक्तेन्धनादौ सत्यपि वह्निसंयोगे दाहो न जायते। तच्छून्ये तु जायते। अतः मणिसमवधाने वह्नेर्दहनशक्तिः नश्यति। मण्यभावदशायां दाहानुकूला शक्तिरुत्पद्यत इति कल्प्यते। एतादृशानुभववेद्या शक्तिः नोद्दिष्टपदार्थेष्वन्तर्भावमर्हतीति चेत्, न, दाहं प्रति मणेः प्रतिबन्धकत्वेन मण्यभावस्य कारणत्वेनैव निर्वाहे मणिसमवधानासमवधानाभ्यामनन्तशक्तितत्प्रागभावध्वंसादीनां कल्पनस्यान्याय्यत्वात् सप्तैव पदार्थाः इति।

अथ शाब्दबोधः। द्रव्यादिपदं द्रव्यत्वादिपरम्। निर्देशस्य भावप्रधानत्वात्। सप्तपदस्य विभाजकधर्मसप्तकान्यतमवति लक्षणा। तदर्थविभाजकधर्मसप्तकान्यतमत्वावच्छिन्ने द्रव्यत्वादीनाम् अभेदसंबन्धेनान्वयः। अन्यतमवतश्च पदार्थशब्दार्थे अभेदेनान्वयः। तथाच द्रव्यत्वगुणत्वकर्मत्वसामान्यत्वविशेषत्वसमवायत्वाभावत्वाभिन्नविभाजकधर्मसप्तकान्यतमवदभिन्नाः पदार्था इति बोधः। विभागवाक्यघटकपदार्थत्वावच्छेदकधर्माः विभाजकधर्मा इत्युच्यन्ते। ननु द्रव्यादिपदानां द्रव्याद्यर्थकत्वस्वीकारेणैव सामञ्जस्ये द्रव्यत्वादिपरत्वं किमर्थमिति चेत्, न, कस्मिन्नपि पदार्थे द्रव्यादिसप्तकाभेदस्यासंभवेन द्रव्यत्वादिपरत्वम् अंगीकृत्यैव तादृशबोधो वाच्यः। नन्वेवमपि कस्मिन्नपि पदार्थविभाजकधर्मे द्रव्यत्वादिसप्तकाभेदः न संभवतीति भक्षितेऽपि

लशुने न शान्तो व्याधिः इति वाच्यम्। अभावपदस्य द्रव्यत्वादिपदार्थविभाजकान्यतमत्वावच्छिन्ने लक्षणास्वीकारात्। एवं च सप्तपदलक्ष्यार्थे नान्यतमत्वं विवक्षणीयम्, प्रयोजनाभावात्।

**तत्र द्रव्याणि पृथिव्यप्तेजो-**
**वाय्वाकाशकालदिगात्ममनांसि नवैव।**

निरूपणक्रमस्यैवोद्देशक्रमनियामकतया प्रथमं पदार्थानुद्दिश्य विभागे कृते तत्क्रमानुसारेणादौ द्रव्याणि विभजते—तत्रेति। तेषु पदार्थेषु मध्ये पृथिव्यादीनि नवैव द्रव्याणि इत्यर्थः। विभागो नाम सामान्यतो ज्ञातस्य विशेषरूपेण कथनम्। सामान्यधर्मव्याप्यपरस्परासमानाधिकरणयावद्धर्मप्रकारकज्ञानानुकूलव्यापार इति निष्कर्षः। अत्र नवत्वेन न्यूनसंख्यायाः, एवकारेण अधिकसंख्यायाश्च व्यवच्छेदः। यथा स्कन्द एवाप्रतिहतशक्तिः इत्यत्र स्कन्दान्यस्मिन् अप्रतिहतशक्तिमत्त्वव्यवच्छेदः, तथा इहापि पृथिव्यादिनवातिरिक्ते द्रव्यत्वव्यवच्छेदः। विशेष्यविशेषणक्रियागतैवकारस्य क्रमेणान्ययोगायोगात्यन्तायोगव्यवच्छेदार्थकत्वात्। शङ्खः पाण्डर एवेत्यत्र विशेषणगतैवकारेण शंखे पाण्डुरवर्णायोगस्य, नीलं सरोजं भवत्येवेत्यत्र क्रियागतैवकारेण सरोजे नीलवर्णात्यन्तायोगस्य च व्यवच्छेदः। तमो न द्रव्यमिति पितृचरणकृतदीपिकाप्रकाशे स्फुटीभविष्यति। अथ शाब्दबोधः। 'तत्र द्रव्याणि' इत्यत्र तच्छब्देन सप्त पदार्थाः प्रतिपाद्यन्ते। त्रल्प्रत्ययस्य घटकत्वमर्थः। पृथिव्यादिपदं पृथिवीत्वादिपरम्। नवपदस्य विभाजकधर्मनवकान्यतमवति लक्षणा। तथाच पृथिवीत्वाप्त्वतेजस्त्ववायुत्वाकाशत्वकालत्वदिक्त्वात्मत्वमनस्त्वरूपविभाजकधर्मान्यतमवन्ति सप्तपदार्थघटकीभूतानि द्रव्याणीति बोधः। अत्रापि द्रव्यादीनां सामान्यलक्षणकथनं विना विभागकरणमनुचितमिति न मन्तव्यम्। पदार्थविभाजकवाक्येनैव द्रव्यत्वादीनां द्रव्यादिसामान्यलक्षणत्वलाभात्।

**रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभाग-**
**परत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेष-**
**प्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशतिर्गुणाः।**



गुणान् विभजते-रूपरसेति। गुणाश्चतुर्विंशतिरिति योजना। "रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः" इति सूत्रेण सप्तदशोक्ताः। चशब्देन भाष्यकारसमुच्चिताः गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाः सप्त। मिलित्वा चतुर्विंशतिरिति ज्ञेयम्। धर्माधर्मयोरदृष्टत्वरूपेणानुगमसंभवेऽपि धर्मत्वाधर्मत्वाभ्यां विभागः भाष्यसंमतः। गुणादिषु गुणरूपसंख्याऽसंभवात् अत्र चतुर्विंशतित्वं एकार्थसमवायादिना अपेक्षाबुद्धिविशेषविषयत्वेन वा बोध्यम्। रूपत्वादिविभाजकधर्मान्यतमवन्तो गुणा इति बोधः। चतुर्विंशतिपदं मृदुत्वलघुत्वादीनामतिरिक्तगुणत्वव्यवच्छेदाय।

**उत्क्षेपणापक्षेपणाकुंचनप्रसारणगमनानि पंच कर्माणि।**

कर्म विभजते—उत्क्षेपणेति। कर्माणि पंचेत्यन्वयः। भ्रमणरेचनस्यन्दनोर्ध्वज्वलनतिर्यग्गमनानां गमन एवान्तर्भावान्न पंचधा विभागोऽनुपपन्नः। उत्क्षेपणत्वापक्षेपणत्वाकुंचनत्वप्रसारणत्वगमनत्वरूपविभाजकधर्मान्यतमवन्ति कर्माणि इति बोधः। पंचपदम् अतिरिक्तव्यवच्छेदार्थमेव।

**परमपरं चेति द्विविधं सामान्यम्।**

सामान्यं विभजते—परमपरं चेति। परत्वं व्यापकत्वम्। अपरत्वं व्याप्यत्वम्। घटत्वपटत्वादिजातीनां व्याप्यत्वम्, सत्ताजातेः व्यापकत्वम्। द्रव्यत्वपृथिवीत्वादीनां सत्तापेक्षया व्याप्यत्वं घटत्वाद्यपेक्षया व्यापकत्वं च भवति। परमित्यादिवाक्ये विधापदस्य विभाजकधर्मद्वयान्यतरवति लक्षणा। द्विपदं तात्पर्यग्राहकम्। तथाच परत्वापरत्वरूपविभाजकधर्मद्वयान्यतरवत् सामान्यमिति बोधः। लक्षणादिकं मूलकृदेव वक्ष्यति।

**नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव।**

विशेषं विभजते—नित्यद्रव्यवृत्तय इति। सामान्यान्तर्गतत्वनिरासाय अनन्ता इति। प्रतिव्यक्ति भिन्ना इति भावः। पृथिव्यादिचतुष्टयपरमाणवः आकाशादिपंचकं च नित्यद्रव्याणि। नित्यद्रव्येषु वृत्तयः इत्यत्र सप्तम्या निरूपितत्वमर्थः। वृत्तयः वृत्तिमन्तः। निरूपितत्वस्य वृत्तौ स्वरूप-

संबन्धेनान्वयः। तथाच नित्यद्रव्यनिरूपितवृत्तितावन्तः असंख्याका विशेषा इति बोधः।

**समवायस्त्वेक एव।**

समवायस्य भेदाभावादाह—समवाय इति। समवायगतैकत्वं स्वसजातीयव्यक्त्यन्तररहितत्वम्। तच्च समवायनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपम्। समवायान्तराभावेन समवायनिष्ठैकत्वस्य तादृशभेदप्रतियोगितानवच्छेदकत्वात्। एकत्वविशिष्टाभिन्नः समवाय इति बोधः।

**अभावश्चतुर्विधः। प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति।**

अभावं विभजते—अभावश्चतुर्विध इति। नञ्पदजन्यप्रतीतिविषयत्वम् अभावत्वम्। यद्यप्यन्यत्र संसर्गाभावान्योन्याभावाभ्यां द्वैविध्यमुक्तम्, तथाप्यवान्तरप्रागभावत्वादिभिर्विभागस्य कर्तव्यतया चतुर्धा विभागः कृतः। प्रागभावत्वप्रध्वंसाभावत्वात्यन्ताभावत्वान्योन्याभावत्वरूपविभाजकधर्मान्यतमवान् अभाव इति बोधः। इत्युद्देशग्रन्थः।

**तत्र गन्धवती पृथिवी। सा द्विविधा नित्या अनित्या च। नित्या परमाणुरूपा। अनित्या कार्यरूपा। पुनस्त्रिविधा शरीरेन्द्रियविषयभेदात्। शरीरमस्मदादीनाम्। इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्त्ति। विषयो मृत्पाषाणादिः।**

पृथिव्यादिपदार्थान्निरूपयिष्यन् प्रथमोद्दिष्टपृथिवीनिरूपणमारभते- तत्रेति। अत्र तच्छब्देन अव्यवहितपूर्वोपस्थितपृथिव्याद्यन्योन्याभावान्ताः परामृश्यन्ते। त्रलः घटकत्वमर्थः। तथाच पृथिव्याद्यन्योन्याभावान्तघटकीभूतेत्यर्थः। निरूपणस्य लक्षणस्वरूपप्रमाणादिप्रकारकज्ञानानुकूलव्यापाररूपतया प्रथमं पृथिव्या लक्षणमाह-गन्धवती पृथिवीति। गन्धवत्त्वं पृथिव्या लक्षणम्। लक्ष्यं पृथिवी। लक्ष्यतावच्छेदकं पृथिवीत्वम्। यद्धर्मावच्छिन्नं लक्ष्यम्, स धर्मो लक्ष्यतावच्छेदकः। अतः पृथिवीनिष्ठा लक्ष्यता पृथिवीत्वावच्छिन्ना। यो यस्याम् अवच्छेदकः, सा तदवच्छिन्नेति नियमात्। तस्याः आश्रयोऽपि तदवच्छिन्न एव। एवं च लक्ष्यतावच्छेदकावच्छिन्नायां



पृथिव्यां गन्धवत्त्वरूपलक्षणसत्त्वाल्लक्ष्ये लक्षणसमन्वयः। अलक्ष्ये जलादौ गन्धासत्त्वान्नातिव्याप्तिः। लक्षणस्य त्रीणि दूषणानि अव्याप्तिरतिव्याप्तिः असंभवश्चेति। लक्ष्यैकदेशावृत्तित्वमव्याप्तिः। यथा गोः कपिलत्वं लक्षणमित्युक्ते लक्ष्या गौः। तदेकदेशः श्वेतगवादिः। तत्र कपिलत्वस्य लक्षणस्यासत्त्वादव्याप्तिः। अलक्ष्यवृत्तित्वमतिव्याप्तिः। यथा गोः शृङ्गित्वं लक्षणमित्युक्ते लक्ष्या गौः। अलक्ष्यं महिषादि। तत्र शृंगित्वस्य सत्त्वात्तल्लक्षणमतिव्याप्तिमत्। लक्ष्यमात्रावृत्तित्वमसंभवः। यथा गोरेकशफवत्त्वं लक्षणमित्युक्ते लक्ष्या गौः, लक्ष्यमात्रे एकशफवत्त्वाभावादसंभवग्रस्तमिदं लक्षणम्। एतद्दूषणत्रयरहितो धर्मः लक्षणम्। तादृशो हि धर्मः गोः सास्नादिमत्त्वम्। अत्र पृथिवीसामान्ये गन्धवत्त्वसत्त्वात् तदितरस्मिन्नसत्त्वाच्च दूषणत्रयमपि नास्तीति निर्दुष्टं गन्धवत्त्वरूपं लक्षणं पृथिव्याः। लक्षणलक्षणपरिष्कारादयः दीपिकाप्रकाशयोः सम्यगवगन्तव्याः। सुरभि सलिलं, सुरभिः समीरणः इत्यादिप्रतीतिस्तु स्वाश्रयसंयुक्तस्वरूपपरंपरासंबन्धेन कुसुमाद्युपाधिगतगन्धमेव सलिलादौ विषयीकरोति, न तु समवायेन। समवायेन गन्धवत्त्वस्यैव लक्षणत्वाभ्युपगमात्। पृथिवीत्वं च गन्धसमवायिकारणतावच्छेदकतया सिद्धा जातिः। अन्यथा गन्धजनकतेजस्संयोगात् पृथिवीपरमाणाविव तेजस्यपि गन्धप्रसंगः। गन्धत्वावच्छिन्नं प्रति पृथिवीत्वेन हेतुत्वानभ्युपगमे गन्धत्वावच्छिन्नस्याकस्मिकत्वापत्त्या जलादावपि तदुत्पत्तेरापत्तिश्च। अत्र गन्धवत्त्वं च गन्धनिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वम्। गन्धः आधेयः। पृथिवी अधिकरणम्। गन्धे आधेयता पृथिव्यामधिकरणता च। आधेयताया अधिकरणतायाश्च निरूप्यनिरूपकभावः संबन्धः। स च स्वरूपसंबन्धविशेषः। तथाच गन्धनिष्ठा या आधेयता पृथिव्यां गन्धोऽस्तीत्याकारकप्रतीतिसिद्धा, तन्निरूपिता या अधिकरणता पृथिवीनिष्ठा, तदाश्रयत्वं पृथिव्याः।

नन्वेवं सति कालस्य सर्वाधारतया कालिकसंबन्धेन सर्वान्तर्गतगन्धस्यापि काले वर्तमानतया अतिप्रसंगः। गन्धनिष्ठा या कालिकसंबन्धावच्छिन्नाधेयता, तन्निरूपिता या कालनिष्ठाधिकरणता, तदाश्रयत्वस्य काले विद्यमानत्वात्। अतः गन्धनिष्ठाधेयतायां समवायसंबन्धावच्छिन्नत्वं

निवेशनीयम्। तन्निवेशे च समवायसंबन्धावच्छिन्नाधेयतानिरूपिताधिकरणतायाः काले असत्त्वान्नातिव्याप्तिः। एवमपि जलादावतिव्याप्तिः। तथाहि—गन्धनिष्ठाधेयता यथा गन्धत्वावच्छिन्ना, तथा गुणत्वावच्छिन्नापि, गन्धे गुणत्वस्यापि सत्त्वात् तथाच एकधर्मावच्छिन्नाधेयता एकैवेति न्यायेन तत्र गुणत्वावच्छिन्नाधेयताग्रहणे गन्धशीतस्पर्शादिनिष्ठगुणत्वावच्छिन्नाधेयताया ऐक्येन तन्निरूपिताधिकरणताया जलादावपि सत्त्वात् तदाश्रयत्वं जलादावक्षतम्। तन्निवारणाय आधेयतायां गन्धत्वावच्छिन्नत्वमपि निवेश्यम्। तन्निवेशे च जलादौ शीतस्पर्शादिनिष्ठगुणत्वावच्छिन्नाधेयतानिरूपिताधिकरणतायाः सत्त्वेऽपि गन्धत्वावच्छिन्नाधेयतानिरूपिताधिकरणताया अभावान्नातिव्याप्तिः। एवं यो घटः उत्पत्त्यनुक्षणे नष्टः, तत्र गन्धाभावात्, सुरभ्यसुरभ्यवयवारब्धे द्रव्ये च चित्रगन्धानंगीकारेण अवयवगन्धस्यैव प्रतीत्या अवयविनि गन्धानङ्गीकारात् तत्रचाव्याप्तिः। अतः समवायसंबन्धावच्छिन्नगन्धत्वावच्छिन्नगन्धनिष्ठाधेयतानिरूपिताधिकरणतासमानाधिकरणजातिमत्त्वस्य विवक्षणम्। उत्पन्नविनष्टघटादौ सुरभ्यसुरभ्यवयवारब्धे च समवायसंबन्धेन गन्धवत्त्वविरहेऽपि पुष्पाद्यवच्छेदेन तादृशाधिकरणतासमानाधिकरणपृथिवीत्वजातिमत्त्वस्य सत्त्वान्नाव्याप्तिः।

ननु उत्पन्नविनष्टघटे कस्माद्गुणाद्यभावः इति चेत्, उच्यते—द्रव्यस्य स्वगतगुणादिकं प्रति कारणतया घटाद्युत्पत्तिकाले गुणादिसत्त्वे कार्यपूर्ववृत्तित्वरूपकारणत्वस्य भंगप्रसंगात्, द्वितीयक्षण एव घटादौ गुणादिरंगीक्रियते। तेन उत्पन्नविनष्टघटे गुणाद्यभावसिद्धिः। नचैवमपि जलादावतिव्याप्तिः। तादृशाधिकरणतावत्पुष्पादिवृत्तिसत्तारूपव्यापकजातिमत्त्वस्य तत्र सत्त्वादिति वाच्यम्। जातौ द्रव्यत्वव्याप्यत्वस्यापि विशेषणत्वेन निवेशनात्। एवं च सत्ताजातेः द्रव्यद्रव्यत्वाभाववद्गुणादिवृत्तितया द्रव्यत्वाभाववदवृत्तित्वरूपद्रव्यत्वव्याप्यत्वासंभावात्, तां जातिमादाय नातिप्रसंगः। एवमपि गन्धसमानाधिकरणद्रव्यत्वाभाववदवृत्तिद्रव्यत्वजातिमत्त्वस्य जलादौ सत्त्वात् पुनरप्यतिव्याप्तिरितिचेत्, अत्र तदभाववदवृत्तित्वरूपं व्याप्यत्वं न विवक्ष्यते। अपितु न्यूनदेशवृत्तित्वरूपं तत् विवक्ष्यते। तच्च तदधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वरूपम्। तथाच द्रव्यत्वाधिकरणं



घटः, तद्वृत्तिः यो भेदः पटो नेति भेदः। एवं द्रव्यं नेत्याकारकप्रतीतिसिद्धस्तु न भवति। तत्प्रतियोगितावच्छेदकजातिः पटत्वादिः, न तु द्रव्यत्वम्। द्रव्यत्वाधिकरणे सत्तावद्भिन्नमिति प्रतीतिसिद्धभेदस्याप्यसंभवात् सत्तापि तद्वृत्तिभेदप्रतियोगितावच्छेदकीभूता न भवति। अतः द्रव्यत्वजातिं सत्ताजातिं वादाय जलादौ नातिव्याप्तिः। नच तथापि जातित्वेन जातिमनिवेश्य गन्धसमानाधिकरणः द्रव्यत्वव्याप्यो यो धर्मः तादृशधर्मवत्त्वम् इत्येतावदेव लक्षणमस्तु इति वाच्यम्। द्रव्यत्वाधिकरणाकाशादिनिष्ठभेदप्रतियोगितावच्छेदकीभूतपृथिवीजलान्यतरत्वमादाय जलादावतिप्रसंगात्। नच समवायेन तादृशधर्मवत्त्वनिवेशे पृथिवीजलान्यतरत्वस्य भेदरूपतया स्वरूपसंबन्धेनैव जलादौ तस्य विद्यमानतया नातिप्रसंग इति वाच्यम्। वायुः पृथिवीजलसंयोगवान्नेति प्रतीतिसिद्धभेदस्य द्रव्यत्वाधिकरणवाय्वादिवृत्तितया तत्प्रतियोगितावच्छेदकः गन्धसमानाधिकरणः यो धर्मः पृथिवीजलसंयोगरूपः तादृशधर्मवत्त्वं समवायेन जलादावक्षतम्, संयोगस्य द्विनिष्ठत्वात्। अतः जलादावतिव्याप्तिपरिहाराय जातित्वेन जातिनिवेशः। पृथिवीजलान्यतरत्वस्य पृथिवीजलसंयोगस्य वा धर्मस्य जातिरूपत्वाभावात् जलादौ नातिव्याप्तिः। एवंच समवायसंबन्धावच्छिन्नगन्धत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तिः द्रव्यत्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकीभूता या जातिः तादृशजातिमत्त्वं पृथिव्या लक्षणमिति फलितम्।[1]

समवायेन गन्धाधिकरणवृत्तिः, द्रव्यत्वाधिकरणजलादिवृत्तिश्च यो भेदः जलं पृथिवी नेतिप्रतीतिसिद्धो भेदः, तत्प्रतियोगितावच्छेदकीभूता च जातिः पृथिवीत्वरूपा। तादृशजातिमत्त्वस्य पृथिव्यां सर्वत्र सत्त्वाल्लक्षणसमन्वयः।

अत्र जातिघटितलक्षणं विहाय आधेयतात्वेनाधेयताम् अधिकरणतात्वेनाधिकरणताञ्चाप्रवेश्य, गन्धनिष्ठा या, तन्निरूपिता या, तदा-

---

[1] वस्तुतस्तु गन्धत्वावच्छिन्नसमवायसंबन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावच्छेदकवत्त्वम् इत्युक्त्यैव समस्तदोषवारणसंभवेन द्रव्यत्वव्याप्यत्वस्य जातित्वेन जातिनिवेशस्य वा प्रयोजनाभावो बोध्यः।

श्रयत्वमित्येतावत एव लक्षणत्वस्वीकारे गन्धनिष्ठाधिकरणतानिरूपिताधेयतामादाय गन्धत्वे अतिप्रसंगः। समवायसंबन्धावच्छिन्ना गन्धनिष्ठा या तन्निरूपिता इति निवेशे तु समवायसंबन्धावच्छिन्नगन्धनिष्ठप्रकारतानिरूपितप्रकारितामादाय गन्धवती पृथिवीति ज्ञाने अतिव्याप्तिः। अतः आधेयतात्वादिना आधेयत्वादिनिवेशः। गन्धनिष्ठा या तन्निरूपिता या अधिकरणता तदाश्रयत्वमिति लक्षणे कृते तु स्वनिष्ठाधेयतानिरूपितत्ववत् स्वनिरूतत्वस्यापि अधिकरणतायां सत्त्वेन गन्धनिष्ठलक्षणतानिष्ठाधेयतानिरूपिताधिकरणत्वस्यापि गन्धे सत्त्वादतिव्याप्तिः। समवायसंबन्धावच्छिन्ना गन्धनिष्ठा या तन्निरूपिता या अधिकरणतेति लक्षणकरणेऽपि गन्धनिष्ठसमवायसंबन्धावच्छिन्नलक्षणतानिरूपिताधिकरणतामादाय गन्ध एवातिप्रसंगः। अतः आधेयतात्वेनाधेयता निवेश्या। गन्धनिष्ठाधेयतानिरूपिता या तदाश्रयत्वमिति लक्षणे गन्धनिष्ठाधेयतानिरूपितावच्छेदकतामादाय पुनरपि गन्धत्वे अतिप्रसंगः। आधेयतायां समवायसंबन्धावछिन्नत्वनिवेशेऽपि गन्धे गन्धत्वस्य समवायेन स्थित्या नातिव्याप्तिनिरासः। अतः अधिकरणतात्वेनधिकरणता निवेश्या। एवमपि गन्धनिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वस्य गन्धे सत्त्वादतिप्रसंगः। स्वनिष्ठाधेयतानिरूपितत्ववत् स्वनिरूपितत्वमप्यधिकरणतायां संभवति इति न्यायेन गन्धनिष्ठाधेयत्वनिष्ठाधेयतानिरूपिताधिकरणत्वस्येव गन्धनिष्ठाधयतानिरूपिताधिकरणत्वस्यापि गन्धे सत्त्वादतिव्याप्तिः। गन्धनिष्ठाधेयत्वनिष्ठाधेयत्वानिरूपितगन्धनिष्ठाधेयतानिरूपिता या अधिकरणता तदाश्रयत्वमिति वा गन्धनिरूपिताधिकरणत्वमिति वा लक्षणकरणेन सामंजस्यात्। उत्पन्नविनष्टघटे अव्याप्तिवारणाय समवायस्वसमवायिसमवेतत्वान्यतरसंबन्धेन गन्धविशिष्टत्वमिति लघुलक्षणे कृते उत्पन्नविनष्टघटे समवायेन गन्धाभावेऽपि स्वसमवायिसमवेतत्वसंबन्धेन गन्धवत्त्वसंभवान्नाव्याप्तिः। स्वपदेन अवयवगन्धः ग्राह्यः। प्रथमसंबन्धाभावे परमाणुषु, द्वितीयसंबन्धभावे उत्पन्नविनष्टघटादौ चाव्याप्तिः। एवंलक्षेणकरणे तु जातिघटितलक्षणं नावश्यकम्।

अथ बोधः। तत्रेति तच्छब्देन पृथिव्यादिपदार्थाः प्रतिपाद्यन्ते। मतुप्प्रत्ययस्य घटकत्वमर्थः। गन्धोऽस्यामस्तीति गन्धवती। इदंशब्देन पृथिवी



प्रतिपाद्यते। सप्तम्या अधिकरणत्वमर्थः। अस्धातोराधेयत्वं तदुत्तरवर्तितिपः आश्रयत्वं चार्थः। पृथिव्याः अधिकरणत्वे अधेयतासंबन्धेनान्वयः। तिबर्थाश्रयत्वस्य स्वरूपसंबन्धेन गन्धे अन्वयः। तथाच पृथिवीनिष्ठाधिकरणतानिरूपिताधेयताश्रयो गन्धः इति वृत्तिजन्यो बोधः। गन्धवती पृथिवीति वाक्ये च मतुबर्थः नित्यसंबन्धी। "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः॥" इति स्मरणात्। मतुबर्थघटकनित्यसंबन्धश्च समवाय एव। समवायत्वं नित्यसंबन्धत्वम् इति हि नैयायिकाः। तादृशसंबन्धे प्रकृत्यर्थगन्धस्य प्रतियोगितया, मतुबन्तार्थस्य पृथिवीपदार्थे अभेदेन चान्वयः। तथाच पदार्थघटकीभूता पृथिवी गन्धप्रतियोगिकसमवाय्यनुयोग्यभिन्ना इति शाब्दबोधः।

ननु पृथिव्या अनित्यत्वे अवयवानवस्थापत्तिः। नित्यत्वे कार्यस्य गन्धवतो द्रव्यान्तरत्वापत्तिः। अतः तां विभजते—सा द्विविधेति। नित्या परमाणुरूपेति। अनवस्थाभयेन तस्या निरवयवत्वात् अवयवनाशतत्संयोगनाशरूपनाशकाभावात्तस्य नित्यत्वम्। अनित्या कार्यरूपेति। द्व्यणुकादिब्रह्माण्डान्ता अनित्या इत्यर्थः। ननु नित्याः परमाणव एव संयोगविशेषविशिष्टाः घटपटादिरूपेण भासन्ते इत्येवोपपत्तौ कार्यरूपपृथिव्यभ्युपगमो व्यर्थ इति चेत्, न; परमाणूनाममहत्त्वात् संयोगविशेषविशिष्टानामपि तेषां प्रत्यक्षानुपपत्त्या द्व्यणुकघटादिप्रतीत्यनुपपत्तेः। बौद्धास्तु महत्त्वस्य संयोगविशेषरूपत्वेन तस्यैव द्रव्यप्रत्यक्षप्रयोजकतया महत्त्वविशिष्टपरमाणुसमूहप्रत्यक्षे न किमपि बाधकमित्याहुः। उत्पत्तिशून्यत्वे सति नाशशून्यत्वम् नित्यत्वम्। उत्पत्तिमत्त्वे सति नाशवत्त्वमनित्यत्वम्।

प्रकारान्तरेण विभजते—पुनरिति। अत्र शरीरेन्द्रियविषयभेदेन विभागः पृथिवीमात्रस्यैव, नानित्यपृथिव्याः। पुनःपदवैयर्थ्यात्। परमाणूनाम् ईश्वरीयप्रत्यक्षविषयत्वेन विषयेष्वन्तर्भावात्। पृथिव्यादिचतुष्टयस्य द्वेधा विभागस्य प्रयोजनन्तु प्रथमप्रकारेण जगदुपादानकारणविवेकः। द्वितीयप्रकारेण द्रव्यस्य भोगसंपादकत्वविवेकः। अत्र पुनस्त्रिविधेत्यादिवाक्ये शरीरादिपदानां शरीरत्वादिपरत्वम्। भेदपदार्थो विशेषधर्मः।

पंचम्याः ज्ञाप्यत्वमर्थः। तस्य च विधापदलक्ष्यार्थविभाजकधर्मान्यतमत्वे अन्वयः। पुनरित्यस्य पूर्वोक्तविभाजकधर्मभेदोऽर्थः। तस्य त्रिविधेत्यत्र विभाजकधर्मेऽन्वयः। तथाच पूर्वोक्तविभाजकधर्मभिन्नशरीरत्वेन्द्रियत्वविषयत्वरूपविशेषधर्मज्ञाप्यविभाजकधर्मत्रयान्यतमवती पृथिवीति शाब्दबोधः। यद्वा शरीरत्वादिभेदप्रयोज्यप्रकारत्रयान्यतमवती पृथिवीति बोधः। अस्मिन्पक्षे पंचम्यर्थः प्रयोज्यत्वम्। विभाजकत्वं च धर्मे विभागवाक्यघटकपदजन्योपस्थितिनिरूपितविशेष्यतानिरूपितप्रकारताश्रयत्वम्।

पार्थिवशरीरं दर्शयति—शरीरमिति। अस्मदादीनामित्यत्र षष्ठ्या आधेयत्वमर्थः। तस्य शरीरपदार्थैकदेशे भोगे अन्वयः। तथाचास्मदादिभोगावच्छेदकशरीरं पार्थिवमिति वाक्यार्थः। शरीरं यद्यपि पांचभौतिकं, तथापि पृथिव्युपादानमिति तस्य पार्थिवत्वम्। अन्येषां तु चतुर्णां भूतानां निमित्तत्वमेवेति बोध्यम्। पृथिवीसमवायिकारणत्वं च शरीरस्य स्वेदाद्यपगमेऽपि गन्धानुवृत्तेरिति भावः। अस्मदादीनामित्यत्रादिपदेन अयोनिजशरीरपरिग्रहः। पार्थिवेन्द्रियं दर्शयति—इन्द्रियमिति। गन्धस्य ग्राहकं गन्धग्राहकम्। षष्ठ्या विषयतानिरूपकत्वम्, ग्रहधातोः प्रत्यक्षम्, ण्वुलः जनकत्वं चार्थः। तथाच गन्धविषयकप्रत्यक्षजनकत्वे सति इन्द्रियत्वं घ्राणेन्द्रियलक्षणम्। गन्धविषयकं यत्प्रत्यक्षम् 'अयं सुरभिः', 'अयम् असुरभिः', इत्याद्याकारकम्, तज्जनकत्वे सति इन्द्रियत्वं घ्राणेन्द्रिये वर्तत इति लक्षणसमन्वयः। इन्द्रियत्वमात्रोपादाने चक्षुरादावपीन्द्रियत्वसत्त्वात्तत्रातिव्याप्तिः। तद्वारणाय गन्धविषयकप्रत्यक्षजनकत्वदलम्। तन्निवेशे तु चक्षुरादाविन्द्रियत्वसत्त्वेऽपि गन्धग्राहकत्वविरहान्नातिव्याप्तिः। तावन्मात्रोक्तौ ज्ञानमात्रं प्रति आत्मनः समवायिकारणतया गन्धविषयप्रत्यक्षस्यापि ज्ञानान्तर्गतत्वात् तज्जनकत्वमात्मनि वर्तत इति तत्रातिव्याप्तिः। तद्वारणायेन्द्रियत्वोपादानम्। एवमपि आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षम्, इति क्रमाद् मनसि इन्द्रियत्वस्य गन्धग्राहकत्वस्य च सत्त्वान्मनस्यतिव्याप्तिसंभवः। अतः अत्र इन्द्रियपदं बहिरिन्द्रियमात्रपरं बोध्यम्। बहिरिन्द्रियत्वं



च मनोभिन्नेन्द्रियत्वम्। गन्धग्राहकमिति प्रयोजनम्। घ्राणमिति संज्ञा। नासाग्रेत्याश्रयोक्तिः। महत्त्वसमानाधिकरणगन्धाः, तदभावाः, तज्जातयः, तदभावाः, तत्समवायः, तदभावः, तद्धर्मः, तदभावश्च घ्राणेन्द्रियग्राह्याः। विषयं दर्शयति—विषय इति। शरीरेन्द्रियभिन्नत्वं विषयत्वम्। रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्कारवती पृथिवी। तत्र रूपरसगन्धस्पर्शाः चत्वारो विशेषगुणाः। अन्ये सामान्यगुणाः। अत एवाहुः—

"रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः।
बुद्ध्यादिभावनान्ताश्च शब्दो वैशेषिका गुणाः ॥" इति।

इमे षोडश विशेषगुणा इत्यर्थः।

"संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा।
गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः ॥"

एते दश सामान्यगुणाः। एते सर्वेऽपि पृथिव्याम्। अत्र वेगपदेन स्थितस्थापकसंस्कारोऽपि गृह्यते।

"वायोर्नवैकादश तेजसो गुणाः
जलक्षितिप्राणभृतां चतुर्दश।
दिक्कालयोः पंच षडेव चाम्बरे
महेश्वरेऽष्टौ मनसस्तथैव च ॥" इति परिगणनात्।
इति पृथिवीनिरूपणम्।

शीतस्पर्शवत्य आपः। ता द्विविधा नित्या अनित्याश्च। नित्याः परमाणुरूपाः। अनित्याः कार्यरूपाः। पुनस्त्रिविधाः शरीरेन्द्रियविषयभेदात्। शरीरं वरुणलोके। इन्द्रियं रसग्राहकं रसनम्। तच्च जिह्वाग्रवर्त्ति। विषयः सरित्समुद्रादिः।

क्रमप्राप्तं जलं लक्षयति—शीतेति। शीतस्पर्शवत्त्वमपां लक्षणम्। तच्च शीतस्पर्शनिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वम्। शीतस्पर्शनिष्ठाधेयता अप्सु शीतस्पर्शोऽस्तीतिप्रतीतिसिद्धा। तन्निरूपिता या अधि-

करणता अप्सु विद्यमानाधिकरणता, तदाश्रयत्वस्याप्सु सत्त्वाल्लक्षणसमन्वयः। उत्पन्नविनष्टजले अव्याप्तिवारणाय कालपृथिव्यादावतिव्याप्तिवारणाय च शीतस्पर्शत्वावच्छिन्नसमवायसंबन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तिद्रव्यत्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकीभूतजातिमत्त्वमिति परिष्करणीयम्। अन्यत्सर्वम् अन्वयबोधश्च पूर्ववत्। जलशरीरस्य कुतो नाध्यक्षमित्यत आह—वरुणलोके इति। विप्रकृष्टवरुणस्वामिकलोके वर्तमानतया तस्य नाध्यक्षमिति भावः। इन्द्रियमिति। रसनेन्द्रियलक्षणं तु रसविषयप्रत्यक्षजनकत्वे सति इन्द्रियत्वम्। रसविषयकप्रत्यक्षम् 'इदं मधुरम्', इदं तिक्तम्', इत्याद्याकारकम्। तज्जनकत्वे सति इन्द्रियत्वस्य रसनेन्द्रिये सत्त्वाल्लक्षणसमन्वयः। दलप्रयोजनं पूर्ववत्। महत्त्वसमानाधिकरणा रसाः, तदभावाः, तत्समवायः, तदभावः, तद्धर्मः, तदभावश्च, रसनेन्द्रियग्राह्याः। गन्धं विहाय स्नेहं संयोज्य चतुर्दश गुणाः जले। तत्र रूपरसस्पर्शस्नेहसांसिद्धिकद्रवत्वानि पञ्च विशेषगुणाः। असांसिद्धिकद्रवत्वं विहाय नव सामान्यगुणाः।

**उष्णस्पर्शवत्तेजः। तद् द्विविधम् नित्यमनित्यं चेति। नित्यं परमाणुरूपम्। अनित्यं कार्यरूपम्। पुनस्त्रिविधं शरीरेन्द्रियविषयभेदात्। शरीरमादित्यलोके। इन्द्रियं रूपग्राहकं चक्षुः। तच्च कृष्णताराग्रवृत्ति। विषयः चतुर्विधः भौमदिव्यौदर्याकरजभेदात्। तत्र भौमं वह्न्यादि। दिव्यमबिन्धनं विद्युदादि। भुक्तस्य परिणामहेतुरौदर्यम्। आकरजं सुवर्णादि।**

तेजसो लक्षणमाह—उष्णस्पर्शेति। उष्णस्पर्शनिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वं लक्षणं बोध्यम्। अत्रापि कालजलादावतिव्याप्तिवारणाय, चन्द्रकिरणादौ उत्पन्नविनष्टतेजसि चाव्याप्तिपरिहाराय समवायसंबन्धावच्छिन्नोष्णस्पर्शत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं विवक्षणीयम्। रूपग्रहजनकत्वे सति इन्द्रियत्वं चक्षुरिन्द्रियलक्षणम्। विशेषणानुपादाने घ्राणादौ विशेष्यानुपादाने आत्मनि चातिव्याप्तिः। महत्त्वोद्भूतरूपालोकसंयोगविशिष्टद्रव्याणि, तदभावाः, तादृशद्रव्यवृत्तिजातयः, तदभावाः, तादृशद्रव्यवृत्त्युद्भूतरूपसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वस्नेहाः, तदभावाः, तादृशगुणवृत्तिजातयः, तदभावाः, तादृशद्रव्यवृत्तिकर्म, तदभावः, तज्जातिः, तदभावः, तादृशद्रव्यवृत्तिसमवायः, तदभावः, तद्धर्मः, तदभावः, एते चक्षुर्ग्राह्याः। येनेन्द्रियेण यद् गृह्यते तेनेन्द्रियेण तन्निष्ठा जातिः तदभावश्च गृह्यत इति नियमः। तैजसविषये अवान्तरभेदसत्त्वादाह—विषयश्चतुर्विध इति। भूमौ भवं भौमम्। दिवि भवं दिव्यम्। उदरे भवमौदर्यम्। आकरात् जायत इत्याकरजम्। भूमौ भवमित्यादौ सप्तम्या अवच्छिन्नत्वमर्थः। भवपदार्थः जन्यतावत्। भूम्यावच्छिन्नजन्यतावदिति बोधः। अत्र अनित्यविषयस्यैव विभागः कृतः, आकरजमिति स्पष्टोक्तेः। भौममित्यादौ संबन्धार्थकत्वमङ्गीकृत्य परमाणूनामपि संग्रहस्तु न भवति, परमाणूनां सर्वत्रसंचारितया भौमत्वदिव्यत्वादिव्यवस्थाकरणासंभवात्, परमाणावबिन्धनत्वासंभवाच्च। अतः नित्यविषयस्य तेजसः पूर्वविभागेनैव ज्ञातप्रायतया अनित्यविषयस्यैव विभागः कृत इति मन्तव्यम्। अबिन्धनमिति। इन्धे अग्निरनेन इति व्युत्पत्त्या "ञि इन्धी दीप्तौ" इति रौधादिकात् धातोः करणल्युडन्तान्निष्पन्नः इन्धनशब्दः दीप्तिकारकवाचकः। आपः इन्धनानि यस्य तत् इति विग्रहः। अबभिन्नकरणप्रयोज्यदीप्त्याश्रय इति बोधः। आदिना वडवानलपरिग्रहः। भुक्तस्येति। फले व्यापारे च धातोः पृथक् शक्तिरिति वदतां दीधितिकृतां मते कर्मप्रत्ययान्तस्थले व्यापारः फले जन्यतासंबन्धेन विशेषणम्। कर्मप्रत्ययस्याश्रयत्वमर्थः। फलविशिष्टव्यापारे एकैव धातोः शक्तिरिति वादिनां मते तु फलं कर्मप्रत्ययार्थः। तथाच व्यापारजन्यगलाधःसंयोगाश्रयतावान्, गलाधस्संयोगानुकूलव्यापारजन्यफलाश्रयतावान्वा भुक्तपदार्थः। षष्ठ्यर्थः संबन्धः। तथाच भुक्तस्य परिणामहेतुरित्यस्य व्यापारजन्यगलाधःसंयोगाश्रयद्रव्यीयतादृशरूपान्तराद्युत्पत्तिनिरूपितहेतुताश्रय इति बोधः। आकरजमिति। आकराज्जायते इति आकरजम्। आकरः खनिः। पंचम्याः निरूपितत्वमर्थः जन्यतायामन्वेति। स्पर्शाद्यपरत्वान्ताः अष्टौ रूपवेगद्रवत्वानीत्येकादश गुणाः तेजसि। तत्र रूपस्पर्शौ द्वौ विशेषगुणौ। गुरुत्वं वर्जयित्वा नव सामान्यगुणाः।

रूपरहितस्पर्शवान्वायुः । स द्विविधः नित्योऽनित्यश्चेति । नित्यः परमाणुरूपः । अनित्यः कार्यरूपः । पुनस्त्रिविधः शरीरेन्द्रियविषयभेदात् । शरीरं वायुलोके । इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवृत्ति । विषयो वृक्षादिकंपनहेतुः । शरीरान्तःसंचारी वायुः प्राणः । स चैकोऽपि उपाधिभेदात्प्राणापानादिसंज्ञां लभते ।

वायुं निरूपयति—रूपरहितेति । रूपेण रहितः रूपरहितः । तृतीयायाः प्रतियोगितानिरूपकत्वमर्थः । रहधातोः अत्यन्ताभावः, क्तप्रत्ययस्य आश्रयत्वं चार्थः । रूपस्याधेयत्वसंबन्धेन प्रतियोगितायामन्वयः । तथाच रूपनिष्ठप्रतियोगितानिरूपकाभावाश्रयत्वे सति स्पर्शवत्त्वं वायोर्लक्षणमिति फलितम् । तदभावं प्रति तत् प्रतियोगि । अतश्च रूपाभावं प्रति रूपं प्रतियोगि । प्रतियोगिता रूपनिष्ठा । तन्निरूपकाभावः 'वायौ रूपं नास्तीति' प्रतीतिसिद्धो रूपाभावः । तदाश्रयत्वे सति स्पर्शवत्त्वस्य वायौ सत्त्वाल्लक्ष्ये लक्षणसमन्वयः । विशेषणमात्रोपादाने गगनादौ, विशेष्यमात्रोपादाने पृथिव्यादौ चातिव्याप्तिः । अतः उभयोपादनम् । एवंच रूपनिष्ठप्रतियोगितानिरूपकाभावाश्रयत्वे सति समवायसंबन्धावच्छिन्नस्पर्शत्वावच्छिन्नाधेयता-निरूपिताधिकरणतावद्वृत्तिद्रव्यत्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकजातिमत्त्वं वायोः निष्कृष्टलक्षणम् । आधेयतायां समवायसंबन्धावच्छिन्नत्वानिवेशे कालिकसंबन्धावच्छिन्नाधेयतामादाय, स्पर्शत्वावच्छिन्नत्वानिवेशे गुणत्वावच्छिन्नाधेयतामादाय च काले अतिव्याप्तिः, तत्र रूपाभावस्य सत्त्वात् । अतः उभयोपादानम् । जातिघटितलक्षणपरिष्कारेणोत्पन्नविनष्टवायौ नाव्याप्तिः । सत्तादिजातिमादायाकाशादावतिव्याप्तिवारणाय न्यूनदेशवृत्ति-त्वरूपद्रव्यत्वव्याप्यत्वनिवेशः । नीरूपपदार्थेषु दोषवारणं स्पर्शवत्त्व-दलघटकविशेषणानां प्रयोजनम् । अत्र पृथिव्यादावतिव्याप्तिवारणाय रूपनिष्ठप्रतियोगितायां समवायसंबन्धावच्छिन्नत्वं निवेशनीयम् । अन्यथा संयोगेन रूपं नास्तीति प्रतीतिसिद्धस्य संयोगसंबन्धावच्छिन्नरूपत्वावच्छिन्नप्रतियोगितानिरूपकाभावाश्रयत्वस्य पृथिव्यादावपि सत्त्वात्तत्रातिव्याप्तिः । ननु एवमपि उभयत्वावच्छिन्नप्रतियोगितामादाय पुनरप्यतिव्याप्तिस्तदवस्थैव । 'रूपघटत्वोभयं नास्ति' इत्याकारकप्रतीतिसिद्धाभावीयरूपघटत्वोभयत्वावच्छिन्नप्रतियोगितायाः ग्रहणात् एकसत्त्वेऽपि द्वयं नास्तीति प्रतीत्या पृथिव्यादौ रूपस्य सत्त्वेऽपि घटत्वादेरभावात्तद्दशोभयाभावाश्रयत्वस्य स्पर्शवत्त्वस्य च तत्र सत्त्वात् निरुक्तोभयाभाव-प्रतियोगितायाम् उभयत्वरूपावच्छेदकधर्मान्तर्गतरूपत्वावच्छिन्नत्वसत्त्वादिति चेत्, प्रतियोगितायां रूपत्वावच्छिन्नत्वमात्रस्यैव निवेशात् रूपघटत्वोभयत्वावच्छिन्नप्रतियोगिताकाभावो न ग्रहीतुं शक्य इति नातिव्याप्तिः । पृथिव्यादौ कालिकादिसंबन्धेन रूपाभाववत्त्वसत्त्वादतिव्याप्तिवारणाय अभावीयसंबन्धः स्वरूपसंबन्धः इति मन्तव्यम् । समवायसंबन्धावच्छिन्न-रूपत्वावच्छिन्नप्रतियोगिताकाभावनिष्ठाधेयता यथा स्वरूपसंबन्धावच्छिन्ना तथा कालस्य सर्वाधारतया कालिकसंबन्धावच्छिन्नापि भवितुमर्हतीति तत्त्वम् । नचैवमपि घटादावतिव्याप्तिः, उत्पन्नं द्रव्यं क्षणमगुणमक्रियं च तिष्ठति इति न्यायेन उत्पत्तिक्षणावच्छेदेन तत्र रूपरहितत्वस्य द्वितीयक्षणावच्छेदेन स्पर्शवत्त्वस्य च वर्तमानत्वादिति वाच्यम् । घटादिनिष्ठरूपाभावाधिकरणतायाः उत्पत्तिकालावच्छिन्नतया निरवच्छिन्नत्वनिवेशेनातिव्याप्तेः परिहरणीयत्वात् । अथवा रूपरहितत्वं रूपाधिकरणभिन्नत्वम् । भेदस्य व्याप्यवृत्तितया, व्याप्यवृत्तेरवच्छेदकसद्भावे प्रमाणाभावात्, रूपाधिकरणभिन्नत्वस्य घटादावसंभवात् । एवंच रूपरहितदलस्य स्वप्रतियोग्यनधिकरणं यद्रूपाभावाधिकरणमिति पर्यवसितार्थकतया घटादौ नातिव्याप्तिः । स्वं रूपाभावः । स्वप्रतियोगिरूपस्य घटादावुत्पत्तिकालावच्छेदेनासत्त्वेऽपि द्वितीयादिक्षणावच्छेदेन सत्त्वात् स्वप्रतियोग्यधिकरणभिन्नत्वं न संभवतीति ज्ञेयम् । एवमपि उत्पन्नविनष्टवायावव्याप्तिवारणाय स्पर्शवत्त्वं स्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम् इति विवक्षणीयम् । तथाचोत्पन्नविनष्टघटेऽतिव्याप्तिः । तत्र निरवच्छिन्नरूपाभावाधिकरणत्वस्य स्पर्शवद्वृत्तिद्रव्यत्वव्याप्यपृथिवीत्वजातिमत्त्वस्य च सत्त्वादिति तु न शङ्क्यम् । स्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातौ रूपासमानाधिकरणत्वस्य साक्षाद्विशेषणतया स्पर्शसमानाधिकरणद्रव्यत्वव्याप्यपृथिवीत्व-

जातेः रूपाधिकरणघटादिवृत्तित्वेन रूपासामानाधिकरण्यस्य पृथिवीत्वजात्यभावात्। नचैवं सति स्पर्शवत्त्वदलमनर्थकम्, एकव्यक्तिवृत्तितया गगनत्वादेर्जातित्वासंभवेन द्रव्यत्वरूपतन्निष्ठजातेः रूपासामानाधिकरण्यासंभवात्, रूपासमानाधिकरणजातिमत्त्वमात्रनिवेशेनापि तत्रातिप्रसंगवारणात् इति वाच्यम्। रूपासमानाधिकरणगुणत्वादिजातिमादाय रूपादावतिव्याप्तिवारणाय स्पर्शवत्त्वदलस्यावश्यकत्वात्। तन्निवेशे तु गुणे गुणाभावात् रूपादौ स्पर्शासंभवान्नातिव्याप्तिः। नचैवमपि रूपासमानाधिकरणजातौ द्रव्यत्वव्याप्यतानिवेशेनैव गुणत्वादिजातिमादाय रूपादावतिव्याप्तिवारणसंभवात् स्पर्शवत्त्वदलं निष्प्रयोजनमिति वाच्यम्। रूपासमानाधिकरणद्रव्यत्वव्याप्यात्मत्वमनस्त्वादिजातिमादायातिव्याप्तिवारणेन सफलत्वात्। आत्मत्वमनस्त्वादौ स्पर्शसामानाधिकरण्यस्याभावात्। तथाच परिष्कृतं वायुलक्षणं समवायसंबन्धावच्छिन्नरूपत्वातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकाभावनिष्ठस्वरूपसंबन्धावच्छिन्नाधेयतानिरूपितनिरवच्छिन्नाधिकरणताश्रयत्वे सति समवायसंबन्धावच्छिन्नस्पर्शत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तिद्रव्यत्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकीभूतजातिमत्त्वम्, रूपनिष्ठाधेयतानिरूपिताधिकरणतावद्वृत्तिस्पर्शनिष्ठाधेयतानिरूपिताधिकरणतावद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं वा पर्यवसन्नम्[1]।

---

१ वस्तुतस्तु रूपरहितस्पर्शवान् वायुः इति विलिखतः अन्नंभट्टस्य रूपरहितत्वविशिष्टो यः स्पर्शः तत्समवायी वायुरिति लक्षणकरणे तात्पर्यम्। तथाच केवलान्वयिभिन्नो यः रूपत्वमात्रावच्छिन्नोऽभावः, तत्समानाधिकरणत्वावच्छिन्ना स्पर्शत्वावच्छिन्ना या समवायसंबन्धावच्छिन्ना आधेयता, तन्निरूपिताधिकरणतावच्छेदकवत्त्वं वायोर्लक्षणम् इति लक्षणपरिष्कारेणैव उक्तसर्वदोषवारणं संभवति। अत्र केवलान्वयिभिन्नत्वनिवेशेन संयोगसंबन्धावच्छिन्नरूपाभावं समवायसंबन्धावच्छिन्नरूपत्वावच्छिन्नघटाद्यभावं वा आदाय न घटादिष्वतिव्याप्तिः। तथाच अधिकरणतायां निरवच्छिन्नत्वनिवेशनं द्रव्यत्वव्याप्यजातित्वेन जातिनिवेशनं च न प्रयोजनावहम्। एवमेव अपाकजानुष्णाशीतस्पर्शवान्वायुरिति कारिकावलीकारलक्षणं परित्यज्य रूपरहितस्पर्शवान्वायुरिति लक्षणं कुर्वता अन्नंभट्टेन वायोः स्पर्शः विजातीय इति वायुर्न प्रत्यक्षः, परं तु तादृशविजातीयस्पर्शानुमेय इति च सूचितम्, विषयतासंबन्धेन बहिरिन्द्रियप्रत्यक्षसामान्ये रूपस्य समवायेन कारणत्वात्।



त्वगिन्द्रियलक्षणमाह—इन्द्रियमिति। तल्लक्षणं तु स्पर्शविषयकप्रत्यक्षजनकत्वे सति इन्द्रियत्वम्। स्पर्शविषयकं यत्प्रत्यक्षम् 'अयमुष्णः', 'अयं शीतः', इत्याकारकं प्रत्यक्षम्, तादृशप्रत्यक्षजनकत्वे सतीन्द्रियत्वस्य त्वगिन्द्रिये सत्त्वात्समन्वयः। विशेष्यमात्रोपादाने चक्षुरादौ, विशेषणमात्रोपादाने आत्मनि चातिव्याप्तिः इत्युभयोपादानम्। ननु त्वगिन्द्रियं यदि करचरणाद्येकैकावयवाधिष्ठितम्, तदा अन्यावयवसंयुक्ततादृशायां घटादेः स्पार्शनं न स्यादित्यत आह—सर्वशरीरवृत्ति इति। सर्वावयवावच्छेदेन शरीरवृत्ति इत्यर्थः। केशनखादीनां रक्तादिमलरूपतया नावयवत्वम्। अत्र साहचर्यात् सर्वपदं सर्वशरीरावयवपरम्। सर्वेषु शरीरे वर्तत इति विग्रहः। सर्वपदोत्तरसप्तम्याः अवच्छिन्नत्वम्, शरीरे इति सप्तम्याः निरूपितत्वं चार्थः। तयोः वृतुधात्वर्थाधेयतायामन्वयः। आख्यातस्य आश्रयत्वमर्थः। तथाच सर्वावयवावच्छिन्ना या शरीरनिरूपिताधेयता, तदाश्रयं त्वगिन्द्रियमिति बोधः। महत्त्वोद्भूतरूपोद्भूतस्पर्शविशिष्टद्रव्याणि, तदभावाः, तज्जातयः, तदभावाः, रूपरूपत्वरूपसमवायरूपाभावभिन्नानि चाक्षुषप्रत्यक्षविषयीभूतानि सर्वाण्यपि त्वगिन्द्रियेण गृह्यन्ते। स्पर्शतदभावौ तज्जातितदभावौ च त्वगिन्द्रियेण गृह्यन्ते।

वायवीयविषयमाह—विषय इति। प्रशस्तपादीयभाष्ये 'वायुः चतुर्विधः, शरीरम् इन्द्रियं विषयः प्राणश्च' इति विभागात् इह त्रैविध्योक्तिरसंगतेत्यत आह—शरीरान्तःसंचारी वायुः प्राण इति। तथाच वृक्षादिकंपनहेतुः, प्राणश्च विषय एवेति भावः, प्राणेऽपि शरीरेन्द्रियभिन्नत्वरूपविषयत्वस्य सत्त्वात्। भाष्ये पृथगुक्तिस्तु बाह्यवायुविलक्षणकार्यकारितयेति बोध्यम्। वृक्षादीति। वृक्षादीनां कंपनम्। तस्य हेतुः जनकतावान्। प्रथमषष्ठ्याः आधेयत्वम् द्वितीयषष्ठ्याः निरूपितत्वं चार्थः। यद्वा कंपनपदस्य वृक्षतद्भिन्ननिष्ठक्रियानिरूपितेति लक्ष्यार्थः। तस्य जनकतायामभेदेनान्वयः। तथाच वृक्षतद्भिन्ननिष्ठक्रियानिरूपितजनकतावानिति बोधः। शरीरेति। अन्तश्शब्दोऽन्तरवयवपरः। तत्र शरीरस्य समवायित्वसंबन्धेनान्वयः।

अन्तरवयवस्य अवच्छिन्नत्वसंबन्धेन संयूर्वकचरधात्वर्थक्रियायामन्वयः। णिनेराश्रयतावानर्थः। धात्वर्थस्याश्रयतायाम्, णिन्यर्थस्य वायौ, तस्य प्राणे चान्वयः। तथाच शरीरसमवाय्यन्तरवयवावच्छिन्नक्रियाश्रयो वायुः प्राण इति बोधः। अपानादिरपि कथं प्राण इत्यत आह—स चेति। सः शरीरान्तःसंचारी वायुः। चकारः प्रकृतवाक्यार्थस्य पूर्ववाक्यार्थसमुच्चयार्थः। एकः = एकशरीरावच्छेदेन एकदा स्वसमानद्वितीयरहितः। स्वाश्रय-शरीरावच्छिन्नत्व–स्वसमानकालिकत्व–स्वभिन्नत्व–रूपसंबन्धत्रयेण वायु-विशिष्टान्यः इति यावत्। उपाधिभेदात् = स्थानक्रियादिरूपनिमित्त-भेदात्। "हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः। उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः॥" इति स्थानभेदः। मुखनासिकाभ्यां निस्सरणात्प्राणः। मूत्रपुरीषयोरधोनयनादपानः। नाडीमुखेषु वितननाद्व्यानः। ऊर्ध्वं नयनादुदानः। भुक्तस्य सम्यक् पाककरणात्समानः। इति क्रियाभेदः। एवं उपाधिभेदप्रयुक्तप्राणापानादिभिन्नसंज्ञावानपि वस्तुतः एक एवेति भावः। अत्र लभधातोः प्राप्तिरर्थः। संज्ञामित्यत्र द्वितीयार्थः कर्मत्वम्। आख्यातार्थः आश्रयत्वम्। प्राणापानादीत्यस्य तादृशानुपूर्वी-विशिष्टोऽर्थः। संज्ञापदस्यानुपूर्वीविशेषावच्छिन्नसंकेतीयविशेष्यतावानर्थः। तथाच प्राणापानाद्यानुपूर्वीविशिष्टाभिन्नसंज्ञाकर्मकप्राप्त्याश्रयतावान् प्राण इति बोधः। वायोरप्रत्यक्षत्वेऽपि व्यजनचालनोत्तरम् अनुभूयमानः पृथिव्याद्यवृत्तिस्पर्शः द्रव्याश्रितः, स्पर्शत्वात्, इत्यनुमानं वायुसद्भावे प्रमाणम्। मीमांसकाः नव्यनैयायिकाश्च वायोः प्रत्यक्षत्वं साधयन्ति। तन्न सम्यक्। वायुः बहिरिन्द्रियजन्यप्रत्यक्षविषयः, प्रत्यक्षस्पर्शाश्रयत्वात्, घटवत्, इत्यनुमाने हि हेतुः सोपाधिकः, उद्भूतरूपवत्त्वस्य घटादौ साध्यव्यापकत्वात्, प्रकृतपक्षे साधनाव्यापकत्वात्। सोपाधिकत्वाच्च व्याप्यत्वासिद्धः। स्पर्शादिपरत्वान्ताः अष्टौ वेगश्चेति नव गुणाः वायौ। तत्र स्पर्शः एक एव विशेषगुणः। गुरुत्वासांसिद्धिकद्रवत्वे विहायाष्टौ सामान्यगुणाः।

शब्दगुणकमाकाशम्। तच्चैकं विभु नित्यं च।



आकाशं लक्षयति—शब्दगुणकमिति। [अत्र गुणपदम् आकाशे विशेषगुणः शब्द एक एवेति द्योतनाय। यद्वा आकाशस्य गुणवत्त्वेन द्रव्यत्वसिद्धये शब्दो द्रव्याश्रितः, गुणत्वादित्यनुमानस्य स्फोरणाय तत् १ तथाहि—सामान्याश्रयत्वविशिष्टप्रतिनियतबहिरिन्द्रियग्राह्यत्वेन शब्दस्य विशेषगुणत्वसिद्धौ, स्पर्शवद्विशेषगुणान्यकालादिचतुष्टयावृत्तिशब्दः द्रव्याश्रितः, गुणत्वादित्यनुमानेनाकाशसिद्धिः।] स्पर्शवद्द्रव्यसमवेतत्वमादायार्थान्तर-वारणाय पक्षतावच्छेदककोटौ स्पर्शवद्विशेषगुणान्यत्वनिवेशः। कालादिवृत्ति-त्वमादाय पुनरर्थान्तरवारणाय तत्रैव कालादिचतुष्टयावृत्तित्वनिवेशः। पक्षताव-च्छेदकसिद्धिस्त्वेवम्। शब्दो न स्पर्शवद्विशेषगुणः, प्रतिनियतेन्द्रियग्राह्यत्वे सति स्वाश्रयसमवायिकारणवृत्तिसजातीयगुणपूर्वकजातीयान्यत्वात्, ज्ञानवत्। परत्वापरत्वयोः व्यभिचारवारणाय सत्यन्तम्। रूपरसादौ व्यभिचार-वारणाय विशेष्यम्। पाकजरूपादौ व्यभिचारवारणाय जातीयेति। एवं शब्दः न आत्मगुणः, श्रोत्रग्राह्यत्वात्, शब्दत्ववत्। न दिक्कालमनसां गुणः, विशेषगुणत्वात्, गन्धवत्। यद्वा शब्दस्य द्रव्यत्वाभ्युपगन्तृमतनिराकरणाय गुणपदम्। आकाशसिद्ध्यर्थं च कप्रत्ययः। तेन प्रत्ययेनाश्रयाश्रयिभाव-बोधनात्। शब्दाभिन्नगुणाश्रयाभिन्नमिति बोधः। शब्दनिष्ठाधेयतानिरू-पिताधिकरणताश्रयत्वम् आकाशस्य लक्षणम्। शब्दनिष्ठा या आधेयता 'आकाशे शब्दोऽस्ति' इति प्रतीतिसिद्धा आधेयता। तन्निरूपिताधि-करणता आकाशनिष्ठाधिकरणता। तदाश्रयत्वमाकाशे वर्तत इति समन्वयः। अत्रापि कालिकसंबन्धावच्छिन्नाधेयतामादाय काले, गुणत्वावच्छिन्ना-धेयतामादाय जलादौ चातिव्याप्तिवारणाय क्रमेण समवायसंबन्धावच्छिन्नत्वं शब्दत्वावच्छिन्नत्वं च शब्दनिष्ठाधेयतायां विशेषणं देयम्। उत्पन्नविनष्टा-काशस्याभावेन जातिघटितलक्षणस्यावश्यकता नास्ति। तथाच समवाय-संबन्धावच्छिन्नशब्दत्वावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयत्वम् आकाशस्य लक्षणमिति फलितम्। आकाशः परममहत्परिमाणवान्, स्पर्शशून्यत्वे सति प्रत्यक्षगुणाश्रयत्वात्, आत्मवत्, इत्यनुमानेन तस्य विभुत्वमित्यभि-प्रायेणाह—तच्चैकं विभु नित्यं चेति। [एकत्वं चात्र स्वसजातीय-व्यक्त्यन्तररहितत्वम्।] आकाशत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियो-

गिताकभेदशून्यत्वमिति वा। विभुत्वं पृथिव्यप्तेजोवायुमनोरूपसर्वमूर्तद्रव्यसंयोगित्वम्। नित्यत्वमुक्तमेव। संख्यादिविभागान्तंपञ्चकं शब्दश्चेति षड् गुणाः आकाशे। शब्द एक एव विशेषगुणः। संख्यादिविभागान्ताः पञ्च सामान्यगुणाः।

अतीतादिव्यवहारहेतुः कालः। स चैको विभुर्नित्यश्च॥

कालं लक्षयति—अतीतादीति। अतीतः आदिः येषां ते इति तद्गुणसंविज्ञानो बहुव्रीहिः। तेन अतीतानागतवर्तमानकालानां ग्रहणं भवति। तेषां व्यवहारः ज्ञानजनकशब्दप्रयोगः। षष्ठ्यर्थो विषयित्वं ज्ञाने अन्वेति। समासे आदिपदम् अतीनतद्भिन्नवस्तुविषयकपरम्। तस्य अभेदेन ज्ञाने अन्वयः[१]। हेतुः कारणतावान्। तत्र व्यवहारस्य निरूपितत्वसंबन्धेनान्वयः। तथाच अतीतादिवस्तुविषयकाभिन्नज्ञानजनकशब्दप्रयोगनिरूपिताकारणतावदभिन्नः कालः इति बोधः। व्यवहारं प्रति व्यवहर्तव्यतावच्छेदकं कारणम्। अयमतीतः, अयमनागतः, इत्यादिव्यवहारे वर्तमानकालवृत्तिध्वंसप्रतियोगिवर्तमानकालवृत्तिप्रागभावप्रतियोग्यादिवस्तूनि व्यवहर्तव्यानि। तत्कुक्षिप्रविष्टः कालः व्यवहर्तव्यतावच्छेदकः। यद्विशिष्टो व्यवहर्तव्यः, स व्यवहर्तव्यतावच्छेदक इति नियमात् कालस्य अतीतादिव्यवहारहेतुत्वरूपं लक्षणं सुस्थितम्। व्यवहारहेतुत्वमात्रोक्तौ व्यहारं प्रति व्यवहर्तव्यस्यापि हेतुतया घटादावतिव्याप्तिः। अतीतादिनिवेशेऽपि घटादेर्व्यवहर्तव्यतानपायादतिव्याप्तिः नापयातीति न शङ्कनीयम्। अतीतादिव्यवहारनिष्ठकार्यतानिरूपितकारणतावज्ज्ञाननिरूपितमुख्यविशेष्यतानिरूपितप्रकारताश्रयत्वमिति परिष्करणात्। अतीतादिव्यवहारनिष्ठकार्यतानिरूपितकारणतावत् ज्ञानम्, अतीतकालविशिष्टो घटः इत्यादि ज्ञानम्। तन्निरूपितघटादिनिष्ठमुख्यविशेष्यतानिरूपितप्रकार-

---

१. वस्तुतस्तु ज्ञाने शब्दप्रयोगेच व्यवहारपदस्य पृथक् शक्तिः। ज्ञानस्य शब्दप्रयो जनकत्वेनान्वयः, ज्ञाने चातीतादिविषयकस्याभेदेनान्वयः इति वक्तव्यम्। अन्यथा व्यवहारपदशक्यैकदेशे अभेदेनान्वयासंभवात्।



ताश्रयत्वस्य अतीतादिकाले सत्त्वाल्लक्षणसमन्वयः। तादृशप्रकारताश्रयत्वस्य घटादावभावेन नातिप्रसङ्गः। नन्वेवमपि घटत्वादावतिव्याप्तिः। तस्यापि तादृशव्यवहारीयघटादिनिष्ठमुख्यविशेष्यतानिरूपितप्रकारताश्रयत्वादिति चेद्, न; तादृशव्यवहारनिष्ठातीतत्वादिविषयकत्वावच्छिन्नकार्यतानिरूपितासाधारणनिमित्तकारणताश्रयः कालः इति लक्षणकरणे तात्पर्यात्। आदिपदं वर्तमानानागतादिकालाव्यापारकम्। परिष्कृतलक्षणे कालस्यातीतादिव्यवहारासाधारणकारणत्वलाभात् न कार्यमात्रं प्रति साधारणकारणेश्वरादृष्टादावतिव्याप्तिशङ्का। स चैक इति। भेदाभावादिति भावः। क्षणादिभेदस्तूपाधिभेदात्। संख्यादिविभागान्ताः पञ्च गुणाः काले। सर्वे सामान्यगुणा एव।

प्राच्यादिव्यवहारहेतुर्दिक्।

दिशं लक्षयति—प्राच्यादीति। शाब्दबोधः पूर्ववत्। प्राच्यादिव्यवहारनिष्ठकार्यतानिरूपितकारणताश्रयत्वं दिशो लक्षणम्। प्राच्यादिव्यवहारनिष्ठकार्यता अयं प्राच्यः, अयं प्रतीच्यः, अयमुदीच्यः, अयमवाच्यः, इत्याकारकव्यवहारे विद्यमाना कार्यता। तन्निरूपितकारणता च प्राच्यादिदिक्षु विद्यमाना। तदाश्रयत्वस्य दिक्षु सत्त्वाल्लक्षणसमन्वयः। अत्रापि पूर्ववत् व्यवहारहेतुत्वमात्रोक्तौ घटादौ, आदिपदाभावे प्रतीच्यादिषु चातिव्याप्त्यव्याप्ती। पूर्ववत् दलनिवेशेऽपि घटादावतिव्याप्तिवारणाय प्राच्यादिव्यवहारनिष्ठकार्यतानिरूपितकारणतावज्ज्ञानीयमुख्यविशेष्यतानिरूपितप्रकारताश्रयत्वं परिष्कृतलक्षणम्। अन्यत्सर्वं पूर्ववत्। संख्यादिविभागान्ताः पञ्च गुणाः दिशि। सर्वे सामान्यगुणा एव।

ज्ञानाधिकरणमात्मा। स द्विविधः परमात्मा जीवात्मा चेति। तत्रेश्वरः सर्वज्ञः परमात्मा एक एव। जीवस्तु प्रतिशरीरं भिन्नो विभुर्नित्यश्च।

आत्मानं लक्षयति—ज्ञानाधिकरणमिति। अत्राधिकरणपदं समवायेन ज्ञानाश्रयत्वलाभाय। अन्यथा कालादावतिव्याप्तेः। ज्ञानस्य

अधिकरणं ज्ञानाधिकरणम्। अधिकरणपदस्य अधिकरणतावानर्थः। सप्तम्यर्थः आधेयत्वम्। तस्य चाधिकरणतायां निरूपितत्वसंबन्धेन अन्वयः। तथाच ज्ञाननिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वमात्मनो लक्षणम्। ज्ञान-निष्ठा या आधेयता, अहं जानामि, ज्ञानवानहम्, इत्याद्याकारकप्रतीति-सिद्धा, तन्निरूपिताधिकरणता आत्मनि, तदाश्रयत्वमात्मन इति लक्षण-समन्वयः। कालिकसंबन्धावच्छिन्नज्ञाननिष्ठाधेयतां गुणत्वावच्छिन्नाधेयतां चादाय कालादावतिव्याप्तिपरिहाराय समवायसंबन्धावच्छिन्नत्वं ज्ञानत्वा-वच्छिन्नत्वं च ज्ञाननिष्ठाधेयतायां विशेषणं निवेश्यम्। उत्पन्नविनष्टात्मनः अभावेन जातिघटितलक्षणपरिष्कारस्यानवसरः। तथाच समवायसंबन्धा-वच्छिन्नज्ञानत्वावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयत्वमात्रं निष्कृष्टलक्षणं भवति। केचित्तु मुक्तात्मनि ज्ञानाभावात् तत्राव्याप्तिवारणाय जातिघटित-लक्षणं कर्तव्यम्, तथाच ज्ञानसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वमिति वक्तव्यमिति वदन्ति। वस्तुतस्तु जातिघटितलक्षणं विनापि अव्याप्तिवारणं भवति। तदर्थमेवाधिकरणपदम्। मुक्तात्मनां शरीराभावेन अव्याप्यवृत्तिज्ञान-स्यासंभवेऽपि अधिकरणस्वरूपाधिकरणताया व्याप्यवृत्तेः सत्त्वात्। ज्ञान-वानात्मेत्युक्तेऽपि गुणगुणिनोस्समवायात् समवायसंबन्धस्य लभ्यतया मुक्तात्मन्यव्याप्तिवारणस्य अधिकारणपदेनैव संभवात् इति ध्येयम्।

आत्मानं विभजते—स द्विविधः इति। नित्यज्ञानाधिकरणत्वमीश्वर-त्वम्। तत्तद्व्यक्तित्वेन सर्वविषयकज्ञानाश्रयत्वमीश्वरत्वम्। जीवस्तु प्रतिशरीरं भिन्न इति। जीवस्य सुखदुःखादिवैलक्षण्येन शरीरभेदेन भेदः निश्ची-यते। विस्तरस्तु दीपिकाप्रकाशे। अत्र बोधः। प्रतिद्रव्यं सत्तेत्यत्र सत्तायां द्रव्यत्वव्यापकत्वस्येव अत्राप्यात्मभेदे शरीरत्वव्यापकत्वभानमङ्गी-कार्यम्। तादृशभानाङ्गीकारे आत्मशरीरयोर्भेदस्य स्वतःसिद्धत्वेन जीवात्मन एकत्वेऽपि शरीरव्यापकत्वस्य जीवात्मभेदेऽक्षततया शरीर-भेदेन जीवभेदबोधकत्वम् अस्य वाक्यस्य न संभवितुमर्हतीति तु न वाच्यम्। अत्र प्रतिपदसमभिव्याहृतशरीरपदस्य स्वावच्छेदकयत्किंचिच्छ-रीरभेदव्यापकत्वमर्थः। तस्य भेदेऽन्वयः। तथाच स्वावच्छेदकयत्किंचिच्छ-



-रीरभेदव्यापकभेदप्रतियोगी जीवात्मेति बोधः। अत्र स्वाश्रयशरीरत्वं व्याप्यतावच्छेदकसंबन्धः। स्वाश्रयावच्छेदकत्वं व्यापकतावच्छेदकसंबन्धः। संख्यादिपंचकं बुद्ध्यादिसंस्कारान्ताः नव इति चतुर्दश गुणाः जीवे। संख्यादिपंचकं ज्ञानेच्छाकृतय इत्यष्टौ ईश्वरे। बुद्ध्यादिभावनान्ता नव विशेषगुणा जीवे। ज्ञानेच्छाकृतित्रयं नित्यसुखांगीकारे सुखं चेति चत्वारो विशेषगुणा ईश्वरे। जीवेश्वरयोः संख्यादिपंचसामान्यगुणाः।

**सुखाद्युपलब्धिकारणम् इन्द्रियं मनः। तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं च।**

मनो लक्षयति—सुखादीति। उपलब्धिर्नाम प्रत्यक्षम्। तथाच सुखादिविषयकप्रत्यक्षनिष्ठकार्यतानिरूपितकारणताश्रयत्वे सति इन्द्रियत्वं मनसो लक्षणम्। सुखादिविषयकं 'अहं सुखी' इत्यादि यत् प्रत्यक्षं तत्कारणत्वस्य इन्द्रियत्वस्य च मनसि सत्त्वाल्लक्षणसमन्वयः। इन्द्रियत्वमा-त्रोक्तौ चक्षुरादौ, तदनुपादाने आत्मनि चातिव्याप्तिः। ननु 'सुखाद्युप-लब्धिकारणमिन्द्रियम्' इति मनसो लक्षणे इन्द्रियत्वस्य, ज्ञानकारणमनः-संयोगाश्रयत्वघटितेन्द्रियलक्षणे मनस्त्वस्य च, प्रविष्टत्वेनान्योन्याश्रयत्वम्। मनोलक्षणे इन्द्रियत्वस्य निवेशेन तस्य च मनःपदघटितत्वेन आत्माश्रयत्वं चेति चेत्, इन्द्रियत्वं हि शब्देतरोद्भूत-विशेषगुणानाश्रयत्वविशिष्टज्ञानकारणमनःसंयोगाश्रयत्वम्। तत्र मनस्त्वं जातिः इति तस्याः स्वरूपतो भानम्। अत्र इन्द्रियत्वग्रहस्य स्वपद्ग्राह्य-मनस्त्वग्रहाधीनत्वेऽपि मनस्त्वस्य जातित्वेन इन्द्रियग्रहानधीनतया स्वग्रहा-धीनतद्ग्रहाधीनस्वग्रहविषयत्वरूपान्योन्याश्रयदोषस्यावकाशो नास्ति[1]।

---

१ वस्तुतस्तु सुखाद्युपलब्धिसाधनमिन्द्रियं मनः इत्येव समीचीनः पाठः। तत्र साधनत्वस्य करणत्वरूपतया सुखाद्युपलब्धिनिरूपितकरणत्वस्यात्मन्यभावे-नैवातिव्याप्तिवारणं भवति। अत एव "साक्षात्कारे सुखादीनां करणं मन उच्यते" इति कारिकावली। एतादृशलक्षणपरिष्कारश्च आवश्यकः। अन्यथा इन्द्रियपद-निवेशेऽपि त्वगिन्द्रियेऽतिव्याप्तिः, ज्ञानसामान्यं प्रति त्वङ्मनःसंयोगस्य कारण-त्वात्। तदर्थं इन्द्रियपदं न लक्षणकोटिप्रविष्टम्। परं तु मनसः इन्द्रिय-त्वमनङ्गीकुर्वतां वेदान्तिनां मतनिरासायैव तदुपादानम् इति ज्ञेयम्।

मनोलक्षणं तु मनस्त्वरूपम्, सुखाद्युपलब्धिकरणत्वं वा। अतः मनस्त्वग्रहस्येन्द्रियत्वग्रहाधीनता नास्तीति विवेकः। एवमेवोत्तरत्रापि 'चक्षुर्मात्रग्राह्यो गुणो रूपम्, रूपग्राहकं चक्षुः, घ्राणग्राह्यो गुणो गन्धः, गन्धग्राहकं घ्राणम्' इत्यादौ गन्धत्वादीनां जातित्वेन स्वरूपतो भानाङ्गीकारात् नान्योन्याश्रय इति सुधीभिरूह्यम्। तच्चेति। एकैकस्यात्मनः एकैकं मनः इत्यात्मनामनेकत्वात् मनसोऽप्यनेकत्वम्। प्रतिपदसमभिव्याहृतात्मपदस्य आत्मत्वव्यापकसंख्यासजातीयमर्थः। नियतत्वं च संख्यावत्त्वम्। संख्याविशिष्टत्वं च संख्यापर्याप्त्यधिकरणत्वम्। अन्यथा मनस एकत्वेऽपि आत्ममनःसाधारणसंख्यामादाय मनसि तादृश, संख्यावत्त्वं स्यात्। तथाच आत्मत्वव्यापकसंख्यासजातीयसंख्यापर्याप्त्यधिकरणत्वं प्रत्यात्मनियतत्वम्। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः, तदभावाः—तज्जातयः, तदभावाः, जीवः, तदभावश्च मनइन्द्रियमात्रग्राह्याः। संख्यादिपरत्वान्ताः सप्त, वेगश्चेत्यष्टौ मनसो गुणाः। अन्यत्सर्वं दीपिकाप्रकाशयोः।

इतिद्रव्यनिरूपणम्।

अथ गुणनिरूपणम्।

**चक्षुर्मात्रग्राह्यो गुणो रूपम्। तच्च शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात् सप्तविधम्। पृथिवीजलतेजोवृत्ति। तत्र पृथिव्यां सप्तविधम्। अभास्वरशुक्लं जले। भास्वरशुक्लं तेजसि।**

तत्र प्रथमोद्दिष्टं रूपं निरूपयति—चक्षुर्मात्रेति। चक्षुर्मात्रेण ग्राह्यः चक्षुर्मात्रग्राह्यः। मात्रपदस्य चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वमर्थः। तृतीयाया जन्यत्वम्, ग्रहधातोः प्रत्यक्षज्ञानम्, ण्यत्प्रत्ययस्य विषयत्वञ्चार्थः। तथाच चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वमिति लक्षणम्। चक्षुर्भिन्नं यदिन्द्रियं त्वगिन्द्रियम्। तज्जन्यं यत्प्रत्यक्षम् अयमुष्णः इत्याद्याकारकम्। तद्विषयत्वं स्पर्शे। तदविषयत्वं रूपे। एवं चक्षुरिन्द्रियजन्यं यत्प्रत्यक्षम् अयं शुक्लः इत्याद्याकारकम्। तद्विषयत्वं



गुणत्वं च रूपे इति समन्वयः। विशेष्यमात्रोपादाने रसादिगुणेषु, विशेषणमात्रोपादाने 'येनेन्द्रियेण या व्यक्तिः गृह्यते तेनेन्द्रियेण तन्निष्ठा जातिः तदभावोऽपि गृह्यते' इति न्यायेन रूपत्वे रूपाभावे चातिव्याप्तिः इति उभयोपादानम्। मात्रपदं विना चक्षुर्ग्राह्यत्वमात्रोक्तौ संख्यायामतिव्याप्तिः। अयमेकः, इमौ द्वौ, इत्याद्याकारकप्रत्यक्षे संख्याया विषयत्वात्, गुणत्वस्य च तत्र सत्त्वात्। मात्रपदनिवेशे तु चक्षुर्भिन्नेन्द्रियं त्वक्, तज्जन्यम् अयमेकः इत्याद्याकारकं प्रत्यक्षम्, तद्विषयत्वस्य संख्यायां वर्तमानतया तदविषयत्वाभावान्नातिव्याप्तिः। चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वमात्रोक्तौ धर्माधर्मादीनामतीन्द्रियगुणानां सर्वेन्द्रियजन्यप्रत्यक्षाविषयतया तत्रातिव्याप्तिः। चक्षुर्ग्राह्यत्वस्य निवेशे तु अतीन्द्रियधर्मादिषु चक्षुर्ग्राह्यत्वाभावान्नातिव्याप्तिः। एवमपि ज्ञानमात्रस्य मनोजन्यत्वेन रूपे चक्षुर्भिन्नमनइन्द्रियग्राह्यतया तदविषयत्वं नेत्यसंभवः। अतः चक्षुर्भिन्नेन्द्रियपदं त्वगिन्द्रियपरम्। एवंच मनोजन्यप्रत्यक्षविषयत्वस्य सत्त्वेऽपि त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वस्य रूपे अभावात् त्वाचसाक्षात्काराविषयत्वे सति चाक्षुषसाक्षात्कारविषयत्वस्य रूपे सत्त्वान्नासंभवः[1]।

अत्र प्रत्यक्षविषयत्वे सति त्वाचसाक्षात्काराविषयत्वमिति लक्षणे कृते ईश्वरीयप्रत्यक्षविषयतामादाय स्पर्शव्यतिरिक्तगुणेष्वतिप्रसंगः। तद्वारणाय जन्यप्रत्यक्षविषयत्वं निवेश्यम्। तथापि योगजप्रत्यक्षविषयतामादाय

---

१ वस्तुतस्तु चाक्षुषसाक्षात्कारस्यापि ज्ञानसामान्यकारणीभूतत्वङ्मनःसंयोगजन्यतया त्वगिन्द्रियजन्यत्वमक्षतमिति एतादृशलक्षणपरिष्कारेऽपे असंभवो दुर्वार एव। तस्मात् मात्रपदं विहायैव लक्षणं करणीयम्। चक्षुष्ट्वावच्छिन्नकरणतानिरूपितज्ञाननिष्ठजन्यतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकताश्रयजातिमत्त्वे सति गुणत्वमिति लक्षणपरिष्कारस्य परमाणुरूपे अव्याप्तिवारणायावश्यकतया तेनैव संख्यादिषु अतिव्याप्तिवारणसंभवः। संख्यादिविषयकत्वावच्छिन्नज्ञानं प्रति चक्षुष्ट्वेन करणत्वाभावात्, संख्यादेः त्वचापि ग्रहणात्। मूलोक्तलक्षणपरिष्कारप्रकारस्तु चर्ममनःसंयोगस्यैव ज्ञानसामान्ये कारणत्वमिति वदतां मिश्राणां मतमनुसृत्येति बोध्यम्।

अधिकरणं ज्ञानाधिकरणम्। अधिकरणपदस्य अधिकरणतावानर्थः। षष्ठ्यर्थः आधेयत्वम्। तस्य चाधिकरणतायां निरूपितत्वसंबन्धेन अन्वयः। तथाच ज्ञाननिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वमात्मनो लक्षणम्। ज्ञाननिष्ठा या आधेयता, अहं जानामि, ज्ञानवानहम्, इत्याद्याकारकप्रतीतिसिद्धा, तन्निरूपिताधिकरणता आत्मनि, तदाश्रयत्वमात्मन इति लक्षणसमन्वयः। कालिकसंबन्धावच्छिन्नज्ञाननिष्ठाधेयतां गुणत्वावच्छिन्नाधेयतां चादाय कालादावतिव्याप्तिपरिहाराय समवायसंबन्धावच्छिन्नत्वं ज्ञानत्वावच्छिन्नत्वं च ज्ञाननिष्ठाधेयतायां विशेषणं निवेश्यम्। उत्पन्नविनष्टात्मनः अभावेन जातिघटितलक्षणपरिष्कारस्यानवसरः। तथाच समवायसंबन्धावच्छिन्नज्ञानत्वावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयत्वमात्रं निष्कृष्टलक्षणं भवति। केचित्तु मुक्तात्मनि ज्ञानाभावात् तत्राव्याप्तिवारणाय जातिघटितलक्षणं कर्तव्यम्, तथाच ज्ञानसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वमिति वक्तव्यमिति वदन्ति। वस्तुतस्तु जातिघटितलक्षणं विनापि अव्याप्तिवारणं भवति। तदर्थमेवाधिकरणपदम्। मुक्तात्मनां शरीराभावेन अव्याप्यवृत्तिज्ञानस्यासंभवेऽपि अधिकरणस्वरूपाधिकरणताया व्याप्यवृत्तेः सत्त्वात्। ज्ञानवानात्मेत्युक्तेऽपि गुणगुणिनोस्समवायात् समवायसंबन्धस्य लभ्यतया मुक्तात्मन्यव्याप्तिवारणस्य अधिकारणपदेनैव संभवात् इति ध्येयम्।

आत्मानं विभजते—स द्विविधः इति। नित्यज्ञानाधिकरणत्वमीश्वरत्वम्। तत्तद्व्यक्तित्वेन सर्वविषयकज्ञानाश्रयत्वमीश्वरत्वम्। जीवस्तु प्रतिशरीरं भिन्न इति। जीवस्य सुखदुःखादिवैलक्षण्येन शरीरभेदेन भेदः निश्चीयते। विस्तरस्तु दीपिकाप्रकाशे। अत्र वोधः। प्रतिद्रव्यं सत्तेत्यत्र सत्तायां द्रव्यत्वव्यापकत्वस्येव अत्राप्यात्मभेदे शरीरत्वव्यापकत्वभानमङ्गीकार्यम्। तादृशभानाङ्गीकारे आत्मशरीरयोर्भेदस्य स्वतःसिद्धत्वेन जीवात्मन एकत्वेऽपि शरीरव्यापकत्वस्य जीवात्मभेदेऽक्षततया शरीरभेदेन जीवभेदबोधकत्वम् अस्य वाक्यस्य न संभवितुमर्हतीति तु न वाच्यम्। अत्र प्रतिपदसमभिव्याहृतशरीरपदस्य स्वावच्छेदकयत्किंचिच्छरीरभेदव्यापकत्वमर्थः। तस्य भेदेऽन्वयः। तथाच स्वावच्छेदकयत्किंचिच्छ-



-रीरभेदव्यापकभेदप्रतियोगी जीवात्मेति वोधः। अत्र स्वाश्रयशरीरत्वं व्याप्यतावच्छेदकसंबन्धः। स्वाश्रयावच्छेदकत्वं व्यापकतावच्छेदकसंबन्धः। संख्यादिपंचकं बुद्ध्यादिसंस्कारान्ताः नव इति चतुर्दश गुणा जीवे। संख्यादिपंचकं ज्ञानेच्छाकृतय इत्यष्टौ ईश्वरे। बुद्ध्यादिभावनान्ता नव विशेषगुणा जीवे। ज्ञानेच्छाकृतित्रयं नित्यसुखांगीकारे सुखं चेति चत्वारो विशेषगुणा ईश्वरे। जीवेश्वरयोः संख्यादिपंचसामान्यगुणाः।

सुखाद्युपलब्धिकारणम् इन्द्रियं मनः। तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं च।

मनो लक्षयति—सुखादीति। उपलब्धिर्नाम प्रत्यक्षम्। तथाच सुखादिविषयकप्रत्यक्षनिष्ठकार्यतानिरूपितकारणताश्रयत्वे सति इन्द्रियत्वं मनसो लक्षणम्। सुखादिविषयकं 'अहं सुखी' इत्यादि यत् प्रत्यक्षं तत्कारणत्वस्य इन्द्रियत्वस्य च मनसि सत्त्वाल्लक्षणसमन्वयः। इन्द्रियत्वमात्रोक्तौ चक्षुरादौ, तदनुपादाने आत्मनि चातिव्याप्तिः। ननु 'सुखाद्युपलब्धिकारणमिन्द्रियम्' इति मनसो लक्षणे इन्द्रियत्वस्य, ज्ञानकारणमनःसंयोगाश्रयत्वघटितेन्द्रियलक्षणे मनस्त्वस्य च, प्रविष्टत्वेनान्योन्याश्रयत्वम्। मनोलक्षणे इन्द्रियत्वस्य निवेशेन तस्य च मनःपदघटितत्वेन आत्माश्रयत्वं चेति चेत्, इन्द्रियत्वं हि शब्देतरोद्भूतविशेषगुणानाश्रयत्वविशिष्टज्ञानकारणमनःसंयोगाश्रयत्वम्। तत्र मनस्त्वं जातिः इति तस्याः स्वरूपतो भानम्। अत्र इन्द्रियत्वग्रहस्य स्वपदग्राह्यमनस्त्वग्रहाधीनत्वेऽपि मनस्त्वस्य जातित्वेन इन्द्रियग्रहानधीनतया स्वग्रहाधीनतद्ग्रहाधीनस्वग्रहविषयत्वरूपान्योन्याश्रयदोषस्यावकाशो नास्ति[1]।

---

१ वस्तुतस्तु सुखाद्युपलब्धिसाधनमिन्द्रियं मनः इत्येव समीचीनः पाठः। तत्र साधनत्वस्य करणत्वरूपतया सुखाद्युपलब्धिनिरूपितकरणत्वस्यात्मन्यभावेनैवातिव्याप्तिवारणं भवति। अत एव "साक्षात्कारे सुखादीनां करणं मन उच्यते" इति कारिकावली। एतादृशलक्षणपरिष्कारश्च आवश्यकः। अन्यथा इन्द्रियपदनिवेशेऽपि त्वगिन्द्रियेऽतिव्याप्तिः, ज्ञानसामान्यं प्रति त्वङ्मनःसंयोगस्य कारणत्वात्। ततश्च इन्द्रियपदं न लक्षणकोटिप्रविष्टम्। परं तु मनसः इन्द्रियत्वमनङ्गीकुर्वतां वेदान्तिनां मतनिरासायैव तदुपादानम् इति ज्ञेयम्।

मनोलक्षणं तु मनस्त्वरूपम्, सुखाद्युपलब्धिकरणत्वं वा। अतः मनस्त्वग्रहस्येन्द्रियत्वग्रहाधीनता नास्तीति विवेकः। एवमेवोत्तरत्रापि 'चक्षुर्मात्रग्राह्यो गुणो रूपम्, रूपग्राहकं चक्षुः, घ्राणग्राह्यो गुणो गन्धः, गन्धग्राहकं घ्राणम्' इत्यादौ गन्धत्वादीनां जातित्वेन स्वरूपतो भानाङ्गीकारात् नान्योन्याश्रय इति सुधीभिरूह्यम्। तच्चेति। एकैकस्यात्मनः एकैकं मनः इत्यात्मनामनेकत्वात् मनसोऽप्यनेकत्वम्। प्रतिपदसमभिव्याहृतात्मपदस्य आत्मत्वव्यापकसंख्यासजातीयमर्थः। नियतत्वं च संख्यावत्त्वम्। संख्याविशिष्टत्वं च संख्यापर्याप्त्यधिकरणत्वम्। अन्यथा मनस एकत्वेऽपि आत्ममनःसाधारणसंख्यामादाय मनसि तादृश, संख्यावत्त्वं स्यात्। तथाच आत्मत्वव्यापकसंख्यासजातीयसंख्यापर्याप्त्यधिकरणत्वं प्रत्यात्मनियतत्वम्। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः, तदभावाः- तज्जातयः, तदभावाः, जीवः, तदभावश्च मनइन्द्रियमात्रग्राह्याः। संख्यादिपरत्वान्ताः सप्त, वेगश्चेत्यष्टौ मनसो गुणाः। अन्यत्सर्वं दीपिकाप्रकाशयोः।

इतिद्रव्यनिरूपणम्।

अथ गुणनिरूपणम्।

**चक्षुर्मात्रग्राह्यो गुणो रूपम्। तच्च शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात् सप्तविधम्। पृथिवीजलतेजोवृत्ति। तत्र पृथिव्यां सप्तविधम्। अभास्वरशुक्लं जले। भास्वरशुक्लं तेजसि।**

तत्र प्रथमोद्दिष्टं रूपं निरूपयति—चक्षुर्मात्रेति। चक्षुर्मात्रेण ग्राह्यः चक्षुर्मात्रग्राह्यः। मात्रपदस्य चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वमर्थः। तृतीयाया जन्यत्वम्, ग्रहधातोः प्रत्यक्षज्ञानम्, ण्यत्प्रत्ययस्य विषयत्वञ्चार्थः। तथाच चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वमिति लक्षणम्। चक्षुर्भिन्नं यदिन्द्रियं त्वगिन्द्रियम्। तज्जन्यं यत्प्रत्यक्षम् अयमुष्णः इत्याद्याकारकम्। तद्विषयत्वं स्पर्शे। तदविषयत्वं रूपे। एवं चक्षुरिन्द्रियजन्यं यत्प्रत्यक्षम् अयं शुक्लः इत्याद्याकारकम्। तद्विषयत्वं



गुणत्वं च रूपे इति समन्वयः। विशेष्यमात्रोपादाने रसादिगुणेषु, विशेषणमात्रोपादाने 'येनेन्द्रियेण या व्यक्तिः गृह्यते तेनेन्द्रियेण तन्निष्ठा जातिः तदभावोऽपि गृह्यते' इति न्यायेन रूपत्वे रूपाभावे चातिव्याप्तिः इति उभयोपादानम्। मात्रपदं विना चक्षुर्ग्राह्यत्वमात्रोक्तौ संख्यायामतिव्याप्तिः। अयमेकः, इमौ द्वौ, इत्याद्याकारकप्रत्यक्षे संख्याया विषयत्वात्, गुणत्वस्य च तत्र सत्त्वात्। मात्रपदनिवेशे तु चक्षुर्भिन्नेन्द्रियं त्वक्, तज्जन्यम् अयमेकः इत्याद्याकारकं प्रत्यक्षम्, तद्विषयत्वस्य संख्यायां वर्तमानतया तदविषयत्वाभावान्नातिव्याप्तिः। चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वमात्रोक्तौ धर्माधर्मादीनामतीन्द्रियगुणानां सर्वेन्द्रियजन्यप्रत्यक्षाविषयतया तत्रातिव्याप्तिः। चक्षुर्ग्राह्यत्वस्य निवेशे तु अतीन्द्रियधर्मादिषु चक्षुर्ग्राह्यत्वाभावान्नातिव्याप्तिः। एवमपि ज्ञानमात्रस्य मनोजन्यत्वेन रूपे चक्षुर्भिन्नमनइन्द्रियग्राह्यतया तदविषयत्वं नेत्यसंभवः। अतः चक्षुर्भिन्नेन्द्रियपदं त्वगिन्द्रियपरम्। एवंच मनोजन्यप्रत्यक्षविषयत्वस्य सत्त्वेऽपि त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वस्य रूपे अभावात् त्वाचसाक्षात्काराविषयत्वे सति चाक्षुषसाक्षात्कारविषयत्वस्य रूपे सत्त्वान्नासंभवः[1]।

अत्र प्रत्यक्षविषयत्वे सति त्वाचसाक्षात्काराविषयत्वमिति लक्षणे कृते ईश्वरीयप्रत्यक्षविषयतामादाय स्पर्शव्यतिरिक्तगुणेष्वतिप्रसंगः। तद्वारणाय जन्यप्रत्यक्षविषयत्वं निवेश्यम्। तथापि योगजप्रत्यक्षविषयतामादाय

१ वस्तुतस्तु चाक्षुषसाक्षात्कारस्यापि ज्ञानसामान्यकारणीभूतत्वङ्मनःसंयोगजन्यतया त्वगिन्द्रियजन्यत्वमक्षतमिति एतादृशलक्षणपरिष्कारेऽपि असंभवो दुर्वार एव। तस्मात् मात्रपदं विहायैव लक्षणं करणीयम्। चक्षुष्ट्वावच्छिन्नकरणतानिरूपितज्ञाननिष्ठजन्यतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकताश्रयजातिमत्त्वे सति गुणत्वमिति लक्षणपरिष्कारस्य परमाणुरूपे अव्याप्तिवारणायावश्यकतया तेनैव संख्यादिषु अतिव्याप्तिवारणसंभवः। संख्यादिविषयकत्वावच्छिन्नज्ञानं प्रति चक्षुष्ट्वेन करणत्वाभावात्, संख्यादेः त्वचापि ग्रहणात्। मूलोक्तलक्षणपरिष्कारप्रकारस्तु चर्ममनःसंयोगस्यैव ज्ञानसामान्ये कारणत्वमिति वदतां मिश्राणां मतमनुसृत्येति बोध्यम्।

तसं ३

पुनरप्यतिव्याप्तिः । तद्वारणायेन्द्रियजन्यप्रत्यक्षविषयत्वमित्युक्तौ रसगन्धादिप्रत्यक्षविषयरसादावतिव्याप्तिरिति चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वरूपपूर्णदलनिवेशनम् । अस्मिन्नेव दले प्रत्यक्षत्वेन प्रत्यक्षमनिवेश्य त्वगिन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुरिन्द्रियजन्यज्ञानविषयत्वमित्युक्तौ ज्ञायमानं लिङ्गं करणम् इति मते, रूपं स्वेतरभिन्नम्, त्वगग्राह्यत्वविशिष्टगुणत्वे सति ग्राह्यत्वसंबन्धेन चक्षुरिन्द्रियात्, इत्यनुमाने चक्षुरिन्द्रियस्य हेतुतया तज्जन्यानुमितिरूपज्ञाने स्वेतरत्वेन रसादीनां घटकतया तेषु चक्षुर्जन्यज्ञानविषयतामादायातिव्याप्तिः । अतः प्रत्यक्षत्वेन प्रत्यक्षनिवेशः । एवमेव त्वगिन्द्रियजन्यप्रत्यक्षं विहाय त्वगिन्द्रियजन्यज्ञानाविषयत्वनिवेशे, स्पर्शः स्वेतरभिन्नः, ग्राह्यत्वसंबन्धेन त्वगिन्द्रियात्, इत्यनुमाने ज्ञायमानलिङ्गभूतत्वगिन्द्रियजन्यानुमितौ स्पर्शेतररूपादीनां विषयतया असंभवः । अतः तत्रापि प्रत्यक्षत्वावच्छिन्नत्वनिवेशः । त्वगिन्द्रियपदं विना प्रत्यक्षाविषयत्वं जन्यप्रत्यक्षाविषयत्वमिति वा लक्षणे चाक्षुषप्रत्यक्षविषयतायाः रूपे सत्त्वादसंभवः । अतः पूर्णदलम् । अत्र प्रत्यक्षं लौकिकं ग्राह्यम् । अन्यथा ज्ञातो घटः इत्याद्याकारकज्ञानलक्षणाद्यलौकिकसन्निकर्षजन्यप्रत्यक्षविषये ज्ञानादावतिव्याप्तिः । लौकिकत्वनिवेशेऽपि घटांशे तादृशज्ञानस्य लौकिकतया अतिव्याप्तिवारणं न संभवतीति तु न वाच्यम् । प्रत्यक्षविषयतायां लौकिकसन्निकर्षप्रयोज्यतानिवेशेन उक्तज्ञानीयविषयतायाः लौकिकसन्निकर्षप्रयोज्यत्वाभावात् । यद्वा प्रत्यक्षे अलौकिकप्रत्यक्षभिन्नत्वं विवक्षणीयम् । ज्ञातो घट इति ज्ञानस्य अलौकिकभिन्नत्वाभावान्नातिव्याप्तिः । त्वगिन्द्रियजन्यप्रत्यक्षाविषयत्वमित्यत्रापि लौकिकमेव प्रत्यक्षं ग्राह्यम् । अन्यथा रूपवान् वह्निरुष्णः इत्याद्यलौकिकत्वाचप्रत्यक्षमादाय तदविषयत्वस्य रूपेऽभावादसंभवः । तथाच त्वगिन्द्रियजन्यप्रत्यक्षनिरूपितलौकिकविषयत्वाभाववत्त्वे सति चक्षुरिन्द्रियजन्यप्रत्यक्षनिरूपितलौकिकसन्निकर्षप्रयोज्यविषयताश्रयत्वे सति गुणत्वम् इति निष्कृष्टलक्षणम् । एवमन्यत्रापि स्वयमूह्यम् ।

रसनग्राह्यो गुणो रसः । स च मधुराम्ललवणकटुकषायतिक्तभेदात् षड्विधः पृथिवीजलवृत्तिः । तत्र पृथिव्यां षड्विधः । जले तु मधुर एव ।



रसं लक्षयति—रसनेति । रसनेन ग्राह्यः रसनग्राह्यः । तृतीयाया जन्यत्वमर्थः । ग्रहधातोः प्रत्यक्षज्ञानम् , ण्यत्प्रत्ययस्य विषयत्वं चार्थः । तथाच रसनेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं रसस्य लक्षणम् । अयं मधुरः, अयमम्लः, इत्याकारकरसनेन्द्रियजन्यप्रत्यक्षे रसस्य विषयतया गुणत्वेन च लक्षणसमन्वयः । गुणत्वमात्रोक्तौ रूपादौ, तदनुपादाने रसत्वतदभावयोश्चातिव्याप्तिः । अतः दलद्वयम् । चित्ररसादौ न मानम्, अवयवरसस्यैव अवयविनि प्रतीत्युपपत्तेः । रसं विभजते—स चेति । आश्रयमाह—पृथिवीति । जले मधुर एवेति । लवणादिप्रतीतिरौपाधिकीति भावः ।

घ्राणग्राह्यो गुणो गन्धः । स द्विविधः सुरभिरसुरभिश्चेति । पृथिवीमात्रवृत्तिः ।

गन्धं लक्षयति—घ्राणेति । शाब्दबोधः रसलक्षणवत् बोध्यः । घ्राणेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं गन्धस्य लक्षणम् । घ्राणेन्द्रियजन्यं यत्प्रत्यक्षम्, अयं सुरभिः इत्यादि प्रत्यक्षम् । तादृशप्रत्यक्षविषयत्वे सति गुणत्वस्य गन्धे सत्त्वात्समन्वयः । गुणत्वमात्रोक्तौ रूपादौ, गुणत्वानुपादाने गन्धत्वगन्धाभावयोश्चातिव्याप्तिः ।

त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः । स त्रिविधः शीतोष्णानुष्णाशीतभेदात् । पृथिवीजलतेजोवायुवृत्तिः । तत्र शीतो जले । उष्णः तेजसि । अनुष्णाशीतः पृथिवीवाय्वोः । रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च । अन्यत्रापाकजं नित्यगतं नित्यम् । अनित्यगतमनित्यम् ।

स्पर्शं लक्षयति त्वगिन्द्रियेति । शाब्दबोधः रूपलक्षणवत् । त्वगितरेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं स्पर्शस्य लक्षणम् । त्वग्भिन्नं यदिन्द्रियं चक्षुरिन्द्रियम् ।

तज्जन्यं यत्प्रत्यक्षम् अयं शुक्लः इत्याकारकम्। तद्विषयत्वं रूपे। तद्विषयत्वं स्पर्शे। एवं त्वगिन्द्रियजन्यं यत्प्रत्यक्षम् अयं शीत इत्याकारकम्। तद्विषयत्वं गुणत्वं च स्पर्शे वर्तत इति समन्वयः। गुणत्वमात्रोक्तौ रूपादौ, गुणत्वानुपादाने स्पर्शत्वस्पर्शाभावयोः, मात्रपदानुपादाने संख्यादौ चातिव्याप्तिः। त्वग्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वमात्रोक्तौ धर्माधर्मादिगुणेष्वतिव्याप्तिः। अतो दलत्रयं देयम्। रूपलक्षणवदत्रापि त्वग्भिन्नेन्द्रियपदेन मन आदाय असंभववारणाय मात्रपदेन त्वग्भिन्नचक्षुरिन्द्रियजन्यप्रत्यक्षाविषयत्वे सति इति विवक्षणीयम्। रूपरसगन्धस्पर्शलक्षणेषु परमाणुगतरूपादौ इन्द्रियग्राह्यत्वविरहेणाव्याप्तिपरिहाराय जातिघटितलक्षणं परिष्करणीयम्। तत्प्रकारश्च त्वगिन्द्रियजन्यप्रत्यक्षविषयतानवच्छेदकचक्षुरिन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकजातिमत्त्वमिति रूपलक्षणे, रसनेन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकजातिमत्त्वमिति रसलक्षणे, घ्राणेन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकजातिमत्त्वमिति गन्धलक्षणे, चक्षुरिन्द्रियजन्यप्रत्यक्षविषयतानवच्छेदकत्वगिन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकजातिमत्त्वमिति स्पर्शलक्षणे च परिष्कारः कर्तव्यः।

नन्वेवं सति गुणत्वदलमनर्थकम्। परमाणुरूपादिष्वव्याप्तिवारणाय रूपादिचतुष्टयलक्षणेषु जातिघटितपरिष्कारस्य कृततया रूपत्वादावतिव्याप्त्यनवकाशात् इति चेत्, न; रूपलक्षणे सुवर्णत्वजातिमादाय सुवर्णे, एवं वायोरूष्मणश्च प्रत्यक्षतावादिमते स्पर्शलक्षणे वायुत्वजातिं ऊष्मत्वजातिं चादाय वायूष्मणोश्चातिव्याप्तिवारणाय, रसलक्षणे मधुररसवत्फलमिति प्रत्यक्षविषयफलत्वजातिं, गन्धलक्षणे सुरभि कुसुममिति प्रत्यक्षविषयकुसुमत्वजातिं चादायातिव्याप्तिवारणाय गुणपदनिवेशस्यावश्यकत्वात्। रसगन्धलक्षणघटकप्रत्यक्षस्य लौकिकत्वेन निवेशात् फलकुसुमादावतिव्याप्त्यनवकाश इति चेत्, तदा तल्लक्षणद्वये गुणपदं स्वरूपकीर्तनपरम् इति ध्येयम्। रूपादिचतुष्टयं पृथिव्यां पाकजमिति। रूपादिचतुष्टयस्य पृथिव्यां पाकजन्यतया नित्यानित्यपृथिवीसामान्ये विद्यमानं यज्जन्यं तदनित्यमिति व्याप्त्या



अनित्यं भवतीति ज्ञायते। जलादौ तु पाकजत्वाभावात् सर्वत्र विद्यमानस्य नानित्यत्वनियमः। किन्तु आश्रयस्य नित्यत्वेनाधेयस्यापि नित्यत्वस्वीकारे बाधकाभावात् नित्यपरमाण्वादिगतं नित्यम्। अनित्यद्व्यणुकादिगतम् अनित्यम्। "आश्रयनाशादाश्रयिनाश" इति नियमात्। अत्र रूपादिचतुष्टयपदस्य रूपादिचतुष्टयघटकमित्येवार्थः। अन्यथा जलादौ रूपादिचतुष्टयाभावात् असंगतिः। पृथिव्यां चतुष्टयम्, जले रूपरसस्पर्शत्रितयम्, तेजसि रूपस्पर्शद्वितयम्, वायौ स्पर्शमात्रम् इति यथासंभवं ग्राह्यम्।

अत्रेदमवधेयम्—पाको नाम विजातीयतेजस्संयोगः। यथा तृणादिपिहिते आम्रफले ऊष्मसंयोगेन पूर्वहरितरूपनाशपूर्वकं पीतरूपं जायते। तत्रापि रूपजनकतेजस्संयोगापेक्षया रसजनकतेजस्संयोगो भिन्नः। एवं गन्धस्पर्शयोरपि। आम्रादौ पूर्वरूपसत्त्वेऽपि रसान्तराद्युत्पत्तिदर्शनात्। एवं पूर्वरससत्त्वेऽपि रूपान्तरोत्पत्तिदर्शनात्, पूर्वगन्धसत्त्वे स्पर्शसत्त्वे च रूपरसाद्युत्पत्तिदर्शनाच्च प्रत्येकं विलक्षणतेजःसंयोगस्यैव कारणत्वम्।

अत्र पीलुपाकवादिनः परमाणुष्वेव पाकमङ्गीकुर्वन्ति। तन्मते पाकार्थं निक्षिप्ते घटे वेगवद्वह्न्यवयवकपालसंयोगेन कपाले आरम्भकसंयोगविरोधिविभागजनकक्रिया जायते। ततो विभागः। तत आरंभकसंयोगनाशः। ततो घटनाशः। एवंरीत्या द्व्यणुकपर्यन्तनाशे परमाणौ पाकेन पूर्वरूपनाशः रूपान्तरोत्पत्तिः। ततः ईश्वरचिकीर्षया परमाणौ क्रिया। ततः परमाणुद्वयसंयोगः। ततो द्व्यणुकोत्पत्तिः। एवं महावयविपर्यन्तम् उत्पद्यते इति। पिठरपाकवादिनस्तु, घटे परमाणुपर्यन्तावयवेषु चैकदैव पाकदर्शनात् पूर्वरूपनाशः रूपान्तरोत्पत्तिश्च जायते। घटादिनाशांगीकारे गौरवम्, सोऽयं घट इति प्रत्यभिज्ञाया अनुपपत्तिश्च इत्याहुः। एवंच गोभुक्ततृणादीनाम् आपरमाणु भङ्गे तृणारम्भकपरमाणुषु दुग्धे यादृशरूपादिकं तादृशरूपादिकं जायते। ततः तैः परमाणुभिः दुग्धद्व्यणुकान्यारभ्यन्ते। एवं दुग्धारंभः। ननु तृणपरमाणुभिः कथं दुग्धद्व्यणुकारम्भ इति चेत्, न, परमाणौ द्रव्यत्वव्याप्यव्याप्यजातिसद्भावे प्रमाणाभावात्। एवं दधिनवनीताद्यारम्भोऽपि इति विवेकः।

**एकादिव्यवहारहेतुः संख्या नवद्रव्यवृत्तिः एकत्वादिपरार्धपर्यन्ता। एकत्वं द्विविधं नित्यमनित्यं चेति। नित्यगतं नित्यमनित्यगतमनित्यम्। द्वित्वादिकं तु सर्वत्रानित्यमेव।**

संख्यां लक्षयति—एकादीति। संख्यापरिमाणपृथक्त्वसंयोगपरत्वापरत्वलक्षणवाक्येषु काललक्षण इव बोधः। (एकादिव्यवहारनिष्ठकार्यतानिरूपितकारणताश्रयत्वं संख्याया लक्षणम्। समन्वयश्च एकादिव्यवहारनिष्ठा या कार्यता, अयमेकः, इमौ द्वौ, इत्याद्याकारकव्यवहारनिष्ठा कार्यता, तन्निरूपिता या कारणता, एकत्वद्वित्वादिसंख्यावृत्तिकारणता, तदाश्रयत्वम् एकत्वादिसंख्यायाम् इति। व्यवहारहेतुत्वमात्रोक्तौ पूर्ववत् घटादिषु अतिव्याप्तिः। आदिपदाभावे द्वित्वादावव्याप्तिः। पूर्ववत् घटादावतिव्याप्तिवारणाय एकादिव्यवहारीयैकत्वादिविषयकत्वावच्छिन्नकार्यतानिरूपितकारणतावज्ज्ञानीयमुख्यविशेष्यतानिरूपितप्रकारताश्रयत्वम् इति लक्षणं परिष्करणीयम्। एकत्वत्वद्वित्वत्वादावतिव्याप्तिवारणाय विशेष्यतायां मुख्यत्वनिवेशः। प्रकारत्वानवच्छिन्नत्वं मुख्यत्वम्। एकत्वं नित्यगतं नित्यम्। आश्रयस्य नित्यत्वे आधेयस्यैकत्वस्यापि नित्यत्वम्। यथा आकाशादौ एकत्वम्। आश्रयस्यानित्यत्वे तन्नाशे तद्गतमेकत्वमपि नश्यति; यथा घटादावेकत्वम्। द्वित्वादिकन्तु सर्वत्रानित्यमेव। द्वित्वादीनाम् अयमेकः, अयमेकः, इत्याकारकापेक्षाबुद्धिजन्यतया कारणनाशात्कार्यनाश इति नियमेन क्षणत्रयावस्थाय्यपेक्षाबुद्धिनाशे द्वित्वादीनां नाशकान्तराभावेन अपेक्षाबुद्धिनाशेनैव तन्नाशोऽङ्गीकर्तव्यः। अन्यथा कालान्तरे अपेक्षाबुद्धिं विनापि चिरस्थायिन्या द्वित्वादिसंख्ययैव तत्प्रत्यक्षापत्तिः। अतः नित्यगतमनित्यगतं वा द्वित्वादिकम् अनित्यमिति सिद्धान्तः।)

**मानव्यवहारासाधारणकारणं परिमाणं नवद्रव्यवृत्ति। तच्चतुर्विधम् अणु महद्दीर्घं ह्रस्वं चेति।**

परिमाणं लक्षयति—मानव्यवहारेति। मानव्यवहारनिष्ठकार्यतानिरूपितकारणताश्रयत्वं परिमाणलक्षणम्। मानव्यवहारनिष्ठा



या कार्यता, अयमणुः, अयं महान्, अयं दीर्घः, अयं ह्रस्वः, इत्याकारकशब्दप्रयोगनिष्ठा कार्यता, तन्निरूपितकारणताश्रयत्वम् अणुत्वादिपरिमाणेष्विति समन्वयः। सर्वत्रापि व्यवहारहेतुत्वघटितलक्षणेषु व्यवहारहेतुत्वमात्रोक्तौ घटादावतिप्रसंगः। असाधारणकारणत्वानिवेशे सर्वकार्यसाधारणकारणेश्वरेच्छादृष्टादावतिप्रसंगः। अतः मानव्यवहारत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वरूपासाधारणकारणत्वनिवेशे ईश्वरेच्छादृष्टादेः मानव्यवहारनिष्ठकार्यतानिरूपितकारणताश्रयत्वेऽपि मानव्यवहारत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वस्याभावान्न दोषः। प्रत्येकमणुत्वत्वादिना अणुत्वादिव्यवहारत्वावच्छिन्नं प्रति कार्यकारणत्वसद्भावात् समन्वयः। एवमुत्तरत्राप्यसाधारणकारणत्वप्रयोजनमूह्यम्। व्यवहारहेतुत्वघटितलक्षणेषु बुद्धिलक्षणातिरिक्तस्थले पूर्ववत् घटादिष्वतिव्याप्तिवारणाय तत्तद्व्यवहारनिष्ठकार्यतानिरूपितकारणतावज्ज्ञानीयमुख्यविशेष्यतानिरूपितप्रकारताश्रयत्वमिति परिष्करणीयम्। एवंच कालेश्वरादौ अतिव्याप्तिप्रसक्त्यभावात् असाधारणकारणत्वानिवेशेऽपि न दोषः। यथाश्रुतलक्षण एव तन्निवेश इति मन्तव्यम्। तद्विभजते—तच्चतुर्विधमिति। गुणिबोधकशब्दैर्गुणविभजनस्यादृष्टत्वात् अण्वादिपदस्याणुत्वाद्यर्थकत्वं वाच्यम्। तच्च भावप्रधाननिर्देश एव संभवति। स च धर्मबोधेच्छया धर्मिप्रतिपादनम्, भावार्थमुख्यविशेष्यतया उच्चरितत्वं वा। तथाच अणुत्वत्वादिकं जातिः। तद्वदणुत्वमिति विवेकः। अणुत्वं च नित्यानित्यभेदेन मनःपरमाणुद्व्यणुकवृत्ति। तदेव पारिमाण्डल्यमित्युच्यते। पारिमाण्डल्यस्य नारम्भकत्वम्, परिमाणस्य स्वसजातीयोत्कृष्टपरिमाणजनकत्वनियमात् अणुजन्यस्य अणुतरत्वप्रसंगात् अणुत्वस्य स्वाश्रयारब्धद्रव्यपरिमाणारम्भकत्वं वक्तुं न शक्यम् इति युक्तिकुशलाः। महत्स्वपि सर्षपतिलादौ तत्प्रकर्षाभावप्रयुक्तोऽणुत्वव्यवहारः गौणः। महत्त्वत्वजातिमन्महत्त्वं नित्यमनित्यं च। आद्यमाकाशादिगतम्। तच्च महत्त्वं नित्यम्, अनणुद्रव्यवृत्तित्वात्, यन्नैवं तन्नैवम्, यथा द्व्यणुकादिपरिमाणम्, इत्यनुमानप्रसिद्धम्। अनित्यं च त्रसरेण्वादौ। तत्क्वचित्प्रत्यक्षं क्वचिदनुमेयम्। तच्च पंचविधम्, संख्या-परिमाण-संख्यापरिमाणोभय-परिमाणप्रचयोभय-संख्यापरिमाणप्रचयत्रि-

त्रयासमवायिकारणकभेदात्। तत्राद्यं त्र्यणुकगतम्। तत्रावयवमहत्त्वाभावेन द्व्यणुकगतत्रित्वसंख्याया एवासमवायिकारणत्वात्। महावयवद्वयारब्धगतं—द्वितीयम्। महावयवैरारब्धे पटादौ वर्तमानं तृतीयम्। प्रचितमहावयवद्वयारब्धतूलादिकं चतुर्थम्। प्रचितमहावयवैरारब्धे पंचमम्। प्रचयत्वं चावयवसंयोगगतो जातिविशेषः। इदमेव प्रशिथिलत्वमित्युच्यते। दीर्घत्वत्वजातिमद्दीर्घत्वम्। ह्रस्वत्वत्वजातिमत् ह्रस्वत्वम्। तत्रादिमं जन्यमहत्त्वसमानाधिकरणतया त्रसरेण्वादावेव, न त्वाकाशादौ। अन्त्यं जन्याणुत्वसमानाधिकरणतया द्व्यणुक एवेति संप्रदायविदः। केचित्तु ह्रस्वत्वदीर्घत्वे अपि नित्यानित्यभेदेन द्विविधे। तत्राद्ये परमह्रस्वत्वपरमदीर्घत्वे परमाणुगगनादौ। अन्त्ये उदाहृते एवेति वदन्ति। चतुर्विधमप्येतत् आश्रयनाशेन नश्यति। ननु ह्रस्वत्वदीर्घत्वयोः अणुत्वमहत्त्वरूपतैवास्तु, परिमाणभेदत्वं मास्तु, इति चेत्, न, क्रोशावधिकमहान् इति व्यवहारस्याभावात्, क्रोशावधिकदीर्घोऽयं पन्थाः इत्यनुभवस्य सत्त्वाच्च महत्त्वदीर्घत्वयोः भेदस्यावश्यकत्वात्।

**पृथग्व्यवहारासाधारणकारणं पृथक्त्वं सर्वद्रव्यवृत्ति।**

पृथक्त्वं लक्षयति—पृथगिति। पृथग्व्यवहारनिष्ठकार्यतानिरूपितकारणताश्रयत्वं पृथक्त्वस्य लक्षणम्। पृथग्व्यवहारनिष्ठा या कार्यता, अयमस्मात् पृथक् इति व्यवहारनिष्ठा कार्यता, तन्निरूपितकारणताश्रयत्वं पृथक्त्वे इति लक्षणसमन्वयः। पृथक्त्वस्य सावधिकत्वेन सप्रतियोगिकान्योन्याभावात् भेदः। अन्योन्याभावरूपत्वे घटात्पृथगितिवत् घटात् पटो नेत्यपि प्रयोगापत्तिः। नहि कश्चित् घटात् पटो नेति प्रयुङ्क्ते। तस्माद्यदर्थयोगे पंचमी सोऽर्थः नञर्थान्योन्याभावतोऽन्यो गुणान्तरं पृथक्त्वमिति भावः। एवमेव 'पक्वो रक्तो घटः अपक्वकृष्णघटो न' इति प्रतीतेः प्रामाणिकत्वात् 'पक्वो रक्तो घटः अपक्वकृष्णघटात् पृथक्' इति प्रत्ययस्याप्रामाणिकत्वाच्च भेदादन्यः पृथक्त्वरूपगुणः सिध्यति[1]।

१, अत्रेदमवधेयम्—पृथक्पदस्य भेदवानर्थः, नतु भेदमात्रम्। तथाच 'घटात् पटो न' इति व्यवहारस्याप्रामाणिकत्वेऽपि 'घटाद्भिन्नः' इति व्यवहारस्य



इदं च पृथक्त्वम् एकपृथक्त्वानेकपृथक्त्वभेदेन द्विविधम्। तत्र चैकपृथक्त्वं नित्यद्रव्यवृत्ति नित्यम्। अनित्यद्रव्यवृत्ति अनित्यम्। अनेकपृथक्त्वं तु 'घटपटौ मठात् पृथक्' इत्यादिप्रतीतिसिद्धम् उभयादिसमवेतम्। तच्च सर्वमनित्यम्। अनेकपृथक्त्वं प्रति असमवायिकारणं प्रत्येकपदार्थगतैकपृथक्त्वानि। निमित्तकारणं चापेक्षाबुद्धिः। नव्यास्तु अनेकपृथक्त्वे मानाभावः। पूर्वोक्तप्रतीतेः प्रत्येकपृथक्त्वमादायैवोपपत्तेः। अन्यथा चैत्रमैत्रौ देवदत्तात् परौ, घटपटौ रूपवन्तौ, इत्यादिप्रतीतिबलेन तुल्ययुक्त्या द्विपर्याप्तानेकपरत्वानेकरूपादीनां सिद्ध्यापत्तेः इति वदन्ति।

**संयुक्तव्यवहारहेतुः संयोगः।**

संयोगं लक्षयति—संयुक्तेति। संयुक्तव्यवहारनिष्ठकार्यतानिरूपितकारणताश्रयत्वं लक्षणम्। संयुक्तव्यवहारनिष्ठा या कार्यता, इमौ संयुक्तौ इति व्यवहारनिष्ठा कार्यता, तन्निरूपितकारणताश्रयत्वं संयोगे इति समन्वयः। स चायं द्विविधः कर्मजः संयोगजश्च इति। कर्मजोऽपि द्विविधः अन्यतरकर्मजोभयकर्मजभेदात्। आद्यो भित्तिहस्तसंयोगादिः। द्वितीयः मेषद्वयसंयोगादिः। संयोगजसंयोगः हस्तपुस्तकसंयोगात् कायपुस्तकसंयोगः। प्रशिथिलत्वनिबिडत्वे संयोगत्वावान्तरजाती। तथा सुकुमारत्वकर्कशत्वे पृथिवीमात्रवृत्तिसंयोगवृत्तिजातिविशेषौ। वैशेषिकास्तु इमे स्पर्शवृत्ती इति वदन्ति। सर्वोऽप्ययं जन्य एव, संयोगत्वावच्छिन्नं प्रति द्रव्यत्वेन हेतुत्वात्। नाशश्च क्वचिद्विभागात्। क्वचिदाश्रयनाशात्। सर्वोऽप्यव्याप्यवृत्तिः। अव्याप्यवृत्तित्वं च स्वप्रतियोगित्वस्वसामानाधिकरण्योभयसंबन्धेनाभावविशिष्टत्वम्। संयोगस्य एकनिष्ठत्वासंभवात् अनेकाश्रितोऽयं गुणः।

**संयोगनाशको गुणो विभागः सर्वद्रव्यवृत्तिः।**

'घटात् पृथक्' इतिवत् प्रामाणिकतया पृथक्त्वस्य अन्योन्याभावरूपतैवेति तु नव्याः। पृथक्त्वस्य गुणान्तरत्वमभ्युपगच्छन्तो गदाधरभट्टास्तु "पृथक्पदमवधित्वार्थकम्, न तु गुणवदर्थकम्; 'चन्द्रात् पृथगप्यनङ्गः' इत्यादिस्थले अवधित्वस्यैव प्रतीतेः" इति वदन्ति।

विभागं लक्षयति—संयोगेति। संयोगस्य नाशकः संयोगनाशकः। षष्ठ्याः प्रतियोगितानिरूपकत्वमर्थः। नश्धातोः ध्वंसोऽर्थः। ण्वुल्प्रत्ययस्य जनकत्वमर्थः। तथाच संयोगप्रतियोगिकनाशजनकगुणत्वं लक्षणम्। संयुक्तद्रव्येषु प्रथमं क्रिया, क्रियातो विभागः, विभागात्पूर्वसंयोगनाशः, पूर्वसंयोगनाशादुत्तरसंयोगोत्पत्तिः, इति क्रमानुसारेण संयोगनाशकत्वं गुणत्वं च विभागे वर्तत इति समन्वयः। गुणत्वमात्रोक्तौ रूपादौ, तदनुपादाने क्रियायामपि परंपरया संयोगनाशकतया तत्रातिव्याप्तिरित्युभयोपादानम्। संयोगनाशकत्वे सति गुणत्वस्य विभागलक्षणत्वाङ्गीकारेऽपि ध्वंसं प्रति प्रतियोगिनः कारणत्वेन संयोगे अतिप्रसंगः। अतः समवायसंबन्धावच्छिन्नत्वं जनकतायां, प्रतियोगितासंबन्धानवच्छिन्नत्वं जन्यतायां वा निवेश्यम्। तथाच स्वरूपसंबन्धेन जायमानं संयोगनाशं प्रति समवायेनैव विभागस्य कारणतया प्रतियोगितासंबन्धेन जायमानसंयोगनाशं प्रति तादात्म्यसंबन्धेनैव प्रतियोगिरूपसंयोगस्य जनकतया संयोगनाशनिष्ठकार्यतायाः प्रतियोगितासंबन्धावच्छिन्नत्वेन संयोगनिष्ठकारणत्वस्य तादात्म्यसंबन्धावच्छिन्नतया च नातिप्रसंगः। नच विभागस्य संयोगाभावरूपत्वमेवास्तु इति शङ्क्यम्। स हि प्रागभावो वा, ध्वंसो वा, अत्यन्ताभावो वा, अन्योन्याभावो वा? नाद्यः, अनुत्पन्नसंयोगयोरपि तथा प्रतीत्यापत्तेः। अत एव न तृतीयः, रूपरसयोरपि विभक्ताविति प्रतीत्यापत्तेः, तन्तुपटयोरपि तत्प्रतीत्यापत्तेश्च, अवयवावयविनोः संयोगाभावात्। न द्वितीयः, विभज्य संयुक्तेऽपि तथा प्रतीत्यापत्तेः, संयोगध्वंससत्त्वात्, ध्वंसप्रागभावयोः सामान्याभावत्वानंगीकारात्। न चतुर्थः, सर्वत्रापि तदापत्तेः। विभागविनाशस्तु क्वचिदाश्रयनाशात्, क्वचिदुत्तरसंयोगनाशात्।

**परापरव्यवहारासाधारणकारणे परत्वापरत्वे। ते द्विविधे। दिक्कृते कालकृते च। दूरस्थे दिक्कृतं परत्वम्। समीपस्थे दिक्कृतमपरत्वम्। ज्येष्ठे कालकृतं परत्वम्। कनिष्ठे कालकृतमपरत्वम्।**



परत्वापरत्वयोर्लक्षणमाह—परापरेति। परव्यवहारनिष्ठकार्यतानिरूपितकारणताश्रयत्वं परत्वम्। परव्यवहारनिष्ठा या कार्यता, अयमस्मात्पर इति व्यवहारनिष्ठा कार्यता, तन्निरूपितकारणताश्रयत्वं परत्वे वर्तत इति समन्वयः। एवमपरव्यवहारनिष्ठकार्यतानिरूपितकारणताश्रयत्वमपरत्वम्। पूर्ववत्समन्वयः। ते विभजते—ते द्विविधे इति। तथाच दैशिकं परत्वं दैशिकमपरत्वं कालिकं परत्वं कालिकमपरत्वमिति विभागः। तत्र दैशिकपरत्वापरत्वे उदाहरति—दूरस्थे इत्यादिना। पाटलीपुरात् काशीमपेक्ष्य प्रयागः परः इत्यनुभवात् प्रयागे पाटलीपुरावधिककाशीनिरूपितपरत्वमंगीकार्यम्। तच्च परत्वं 'पाटलीपुरात् काशीमपेक्ष्य प्रयागो दूरस्थः' इत्यपेक्षाबुद्ध्यात्मकप्रयागनिष्ठदूरस्थत्वज्ञानात् पाटलीपुरावधिकं काशीनिरूपितं प्रयागे जायते। एवं 'पाटलीपुरात् प्रयागमपेक्ष्य काशी समीपस्था' इत्यपेक्षाबुद्ध्यात्मककाशीनिष्ठसमीपस्थत्वज्ञानात् पाटलीपुरावधिकप्रयागनिरूपितापरत्वं काश्यां जायते। दैशिकपरत्वे एकस्यां दिश्यवस्थितयोः सन्निकृष्टमवधिं कृत्वा अयमस्माद्विप्रकृष्टः इत्येवं परत्वाधारे या बुद्धिरुत्पद्यते सा निमित्तकारणम्। पिण्डपरदिक्संयोगः असमवायिकारणम्। अपरत्वे विप्रकृष्टमवधिं कृत्वा अयमस्मात्सन्निकृष्ट इति मतिर्निमित्तम्। सन्निकृष्टदिक्संयोगः असमवायिकारणम्। कालिके परत्वापरत्वे उदाहरति—ज्येष्ठे इत्यादिना। चैत्रो मैत्रात्पर इति अनुभवात् मैत्रावधिकपरत्वं चैत्रेऽङ्गीकार्यम्। तच्च चैत्रवृत्तिज्येष्ठत्वज्ञानात् चैत्रो मैत्रात् ज्येष्ठ इति अपेक्षाबुद्धिरूपात् जायते। एवं मैत्रः चैत्रादपरः इत्यनुभवात् मैत्रे चैत्रावधिकमपरत्वं स्वीकार्यम्। तच्च मैत्रवृत्तिकनिष्ठत्वज्ञानात् मैत्रः चैत्रात्कनिष्ठः इत्यपेक्षाबुद्धिरूपाज्जायते। कालिकपरत्वापरत्वयोस्तु अनियतदिगवस्थितयोः युवस्थविरयोः अयमस्मात् अल्पतरतपनपरिस्पन्दान्तरितजन्मा, अयमस्मात् प्रचुरतरसूर्यपरिस्पन्दान्तरितजन्मेत्येवं बुद्धी निमित्ते। तत्तत्पिण्डतत्तत्कालसंयोगौ असमवायिनौ। एतन्नाशश्चैतादृशबुद्धिनाशात्।

**आद्यपतनासमवायिकारणं गुरुत्वं पृथिवीजलवृत्ति।**

गुरुत्वं लक्षयति—आद्येति। आद्यपतननिष्ठकार्यतानिरूपितासम—

-वायिकारणताश्रयत्वं लक्षणम्। आद्यपतननिष्ठकार्यतानिरूपिता या असमवायिकारणता, गुरुत्वनिष्ठासमवायिकारणता, तदाश्रयत्वं गुरुत्वे इति समन्वयः। आद्यपदाभावे द्वितीयादिपतनासमवायिकारणे वेगेऽतिव्याप्तिः। असमवायिकारणत्वानुपादाने तत्समवायिकारणे फलादौ, निमित्तकारणे वाय्वादौ चातिव्याप्तिः। इदं चातीन्द्रियं पतनरूपकार्यानुमेयम्, नित्यवृत्ति नित्यम्, अनित्यवृत्त्यनित्यम्, कारणगुणप्रक्रमोत्पत्ति, आश्रयनाशनाश्यञ्च।

**आद्यस्यन्दनासमवायिकारणं द्रवत्वं पृथिवीजलतेजोवृत्ति। तद् द्विविधं सांसिद्धिकं नैमित्तिकं चेति। सांसिद्धिकं जले। नैमित्तिकं पृथिवीतेजसोः। पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम्। तेजसि सुवर्णादौ।**

द्रवत्वं लक्षयति—आद्येति। आद्यस्यन्दननिष्ठकार्यतानिरूपितासमवायिकारणताश्रयत्वं द्रवत्वस्य लक्षणम्। आद्यस्यन्दननिष्ठकार्यतानिरूपिता या असमवायिकारणता, द्रवत्वनिष्ठासमवायिकारणता, तदाश्रयत्वं द्रवत्वे इति लक्षणसमन्वयः। आद्यपदाभावे द्वितीयादिस्यन्दनमादाय वेगेऽतिव्याप्तिः। असमवायित्वाभावे समवायिकारणनिमित्तकारणजलवाय्वादावतिव्याप्तिः। अत्र लक्षणद्वये असमवायिकारणत्वम् आद्यपतनादिनिष्ठकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणताश्रयत्वरूपमेव। कार्यतावच्छेदकसंबन्धस्य विवक्षणे प्रयोजनाभावात् समवायसंबन्धावच्छिन्नकार्यतानिरूपितत्वं न निवेशनीयम्।

**चूर्णादिपिण्डीभावहेतुः गुणः स्नेहः जलमात्रवृत्तिः।**

स्नेहं लक्षयति—चूर्णादीति। धारणाकर्षणहेतुभूतविलक्षणसंयोगः पिण्डीभावः। चूर्णादिपिण्डीभावनिष्ठकार्यतानिरूपितकारणताश्रयत्वे सति गुणत्वं स्नेहस्य लक्षणम्। चूर्णादिपिण्डीभावनिष्ठकार्यतानिरूपिता या कारणता, स्नेहनिष्ठा कारणता, तदाश्रयत्वं स्नेह इति समन्वयः। विशेष्यमात्रोक्तौ रूपादौ, विशेषणमात्रोपादाने कालेश्वरादौ च



अतिव्याप्तिः। नचैवमप्यदृष्टेऽतिव्याप्तिः दुर्वारा। असाधारणकारणत्वनिवेशेन वारणात्। ननु एवं कालेश्वरादावसाधारणकारणत्वविरहादेवातिव्याप्तिपरिहारेण गुणपदं व्यर्थमिति चेत्, चूर्णादौ तद्वारकतया तस्य सार्थक्यात्। अत्र स्नेहस्य पिण्डीभावहेतुत्वं स्वाश्रयसंयुक्तत्वसंबन्धेनैव वक्तव्यम्। द्रुतजलसंयोगस्य हेतुत्वं तु समवायसंबन्धेनेति लाघवात् स्नेहापेक्षया द्रुतजलसंयोगस्यैव साक्षात्तद्धेतुत्वं वक्तुमुचितमिति बहवोऽभिप्रयन्ति।

**श्रोत्रग्राह्यो गुणः शब्द आकाशमात्रवृत्तिः। स द्विविधः ध्वन्यात्मको वर्णात्मकश्चेति। ध्वन्यात्मको भेर्यादौ। वर्णात्मकः संस्कृतभाषादिरूपः।**

शब्दं लक्षयति—श्रोत्रेति। श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं शब्दस्य लक्षणम्। श्रोत्रेन्द्रियजन्यं यत्प्रत्यक्षम् 'अयं भेरीशब्दः, अयं वेदोच्चारणशब्दः' इत्याद्याकारकं प्रत्यक्षम्, तद्विषयत्वे सति गुणत्वस्य शब्दे सत्त्वात्समन्वयः। विशेष्यमात्रोपादाने रूपादौ, विशेषणमात्रोपादाने शब्दत्वादौ चातिव्याप्तिः। अत्र अन्तिमशब्दस्यैव श्रोत्रेन्द्रियग्राह्यतया आदिमादिशब्दे तल्लक्षणाभावात् अव्याप्तिरिति श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकजातिमद्गुणत्वं विवक्षणीयम्। तादृशजातिमत्त्वमादिमादिषु अप्रत्यक्षेषु शब्देष्वपीति नाव्याप्तिः। न चैवं जातिघटितलक्षणकरणात् शब्दत्वादावतिव्याप्त्यभावात् गुणत्वस्य वैयर्थ्यमिति वाच्यम्। भेर्यादावतिव्याप्तिवारणाय तस्यावश्यकत्वात्। तथा हि श्रोत्रेन्द्रियजन्यं यत्प्रत्यक्षम् अयं भेरीशब्दः इत्यादि। तद्विषयतावच्छेदकीभूता जातिः भेरीत्वादिः। तद्वत्त्वं भेर्यादावित्यतिव्याप्तिः। गुणत्वनिवेशे च तत्र गुणत्वस्याभावान्नातिव्याप्तिः। यदि श्रोत्रेन्द्रियजन्यत्वं न प्रत्यक्षविशेषणम्, किन्तु श्रोत्रेन्द्रियप्रयोज्यत्वं प्रत्यक्षविषयताविशेषणमित्यङ्गीक्रियते। तथाच भेर्यादिनिष्ठविषयतायाः श्रोत्रेन्द्रियप्रयोज्यताविरहात् उक्तलक्षणस्य नातिव्याप्तिरित्युच्येत, तदा गुणपदं स्वरूपकीर्तनपरम्। एवं श्रोत्रेन्द्रियजन्यप्रत्यक्षे लौकिकत्वनिवेशेनापि भेर्यादौ अतिव्याप्तिवारणं भवति,...

अयं भेरीशब्दः इति प्रत्यक्षस्य भेर्यंशे अलौकिकत्वात्। शब्दः, तदभावाः, तज्जातयः, तत्समवायश्च श्रोत्रेन्द्रियग्राह्याः।

**सर्वव्यवहारहेतुर्ज्ञानं बुद्धिः। सा द्विविधा स्मृतिरनुभवश्चेति।**

बुद्धिं निरूपयति—सर्वेति। व्यवहारो वाक्यप्रयोगः। 'अयं बुद्धा शब्दरचना' इति न्यायात् अर्थज्ञानस्य शब्दप्रयोगहेतुत्वम्। यद्वा व्यवहारः प्रवृत्तिः, जानाति, इच्छति, करोति, इति क्रमात् प्रवृत्तिसामान्ये ज्ञानस्य कारणत्वम्। ज्ञानं बुद्धिरिति पर्यायबोधनाय। बुद्धिर्ज्ञानपदयोरैक्येऽर्थः। सांख्यादिमत इव बुद्धेर्व्यापारो ज्ञानमिति न मन्तव्यम्। यद्वा लाघवमभिप्रेत्य ज्ञानत्वजातिमत्त्वरूपलक्षणान्तरलाभाय ज्ञानपदम्। सर्वव्यवहारनिष्ठकार्यतानिरूपितकारणताश्रयत्वं बुद्धेर्लक्षणम्। सर्वव्यवहारनिष्ठा या कार्यता, अयं घट इत्यादिशब्दप्रयोगे वर्तमाना कार्यता, तन्निरूपिता या कारणता, अयं घटः इत्यादिबुद्धौ वर्तमाना कारणता, तदाश्रयत्वं बुद्धौ इति समन्वयः। ननु अत्र सर्वे ये व्यवहाराः तद्धेतुत्वमिति वा, सर्वमिति यो व्यवहारः तद्धेतुत्वमिति वा विग्रहः? नाद्यः। कस्मिन्नपि ज्ञाने सर्वव्यवहारहेतुत्वं नास्ति इत्यसंभवप्रसङ्गात्। न द्वितीयः। सर्वत्वप्रकारकव्यवहारे सर्वमितिज्ञानमात्रस्य हेतुतया तद्व्यतिरिक्तघटपटादिज्ञानेष्वव्याप्तेरिति चेत्, न, द्वितीयपक्षमवलंब्य सर्वत्वप्रकारकज्ञानजनकशब्दप्रयोगनिष्ठकार्यतानिरूपितकारणतावद्वृत्तिजातिमत्त्वमिति परिष्करणात्। सर्वत्वप्रकारकव्यवहारनिष्ठकार्यतानिरूपितकारणतावत् सर्वमिति ज्ञानम्। तद्वृत्तिर्या जातिः, ज्ञानत्वजातिः, तद्वत्त्वस्य घटादिसर्ववस्तुविषयकज्ञानेष्वपि सत्त्वान्नाव्याप्तिः। नचैवं सर्वव्यवहारनिष्ठकार्यतानिरूपितकारणतावद्वृत्तिगुणत्वजातिमादाय रूपादावतिव्याप्तिरिति वाच्यम्। जातौ गुणत्वव्याप्यत्वस्य निवेशनीयत्वात्। गुणत्वजातिः न गुणत्वव्याप्या, किन्तु ज्ञानत्वादिजातिरेवेति नातिव्याप्तिः। अथवा सर्वपदं स्वरूपकीर्तनपरम्। व्यवहारहेतुत्वमात्रनेव लक्षणम्। शब्दप्रयोगं प्रति ज्ञानस्यैव साक्षाद्धेतुतया घटादीनां च ज्ञानद्वारैव कारणतया साक्षात्कारणत्वकथनेनैव घटादावतिव्याप्तिवारण-



संभवात् विग्रहविकल्पप्रयुक्तदोषावकाशो न। नचैवं कालेश्वरादावतिव्याप्तिः, गुणत्वस्यापि निवेशनीयत्वात्। नच तयाप्यदृष्टे अतिव्याप्तिः। व्यवहारासाधारणकारणत्वस्यापि विवक्षणीयत्वात्। एवंच गुणपदं व्यर्थम्। अत एव मूलकारोऽपि गुणपदं विनैव निरूपितवानिति मन्तव्यम्।

अत्र घटव्यवहारहेतुर्ज्ञानमित्युक्तौ घटत्वप्रकारकव्यवहारनिष्ठकार्यतानिरूपितकारणतावद्वृत्तिज्ञानत्वजातेः ज्ञानसामान्ये सत्त्वेन लक्षणसमन्वयसंभवेऽपि तथानुक्त्वा सर्वव्यवहारहेतुरिति यदतः ग्रन्थकृतः व्यवहारत्वावच्छिन्नं प्रति ज्ञानत्वेन कारणत्वकथन एव अभिप्रायः। तथाच व्यवहारत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकजातिमत्त्वस्य निवेशनात् निर्विकल्पकज्ञाने, यस्मात् सविकल्पकज्ञानात् न कदापि व्यवहारोत्पत्तिः तस्मिन् ज्ञाने, मूकादीनां ज्ञानेऽपि नाव्याप्तिः, तेष्वपि ज्ञानत्वस्य सत्त्वात्। नन्वेवं सति ज्ञानपदं व्यर्थम्, कार्यसामान्यं प्रति साधारणकारणीभूतकालादौ तादृशकारणतावच्छेदकजातेरभावादेवातिव्याप्तिवारणस्य कर्तुं शक्यत्वादिति चेत्, बुबोधयिषां विना शब्दप्रयोगासंभवेन व्यवहारत्वावच्छिन्नं प्रति बुबोधयिषात्वेन कार्यकारणभावकल्पनाया आवश्यकतया बुबोधयिषायामतिव्याप्तिवारणाय ज्ञानपदसार्थक्यात्। एवंच बुबोधयिषायामतिव्याप्तिवारणाय प्रयुक्तज्ञानत्वरूपलक्षणेनैव सर्वदोषपरिहारसंभवेन शिष्टस्वरूपकीर्तनपरमिति मन्तव्यम्। बुद्धिं विभजते—सा द्विविधेति। स्मृतिरनुभवश्चेति। स्मृतित्वानुभवत्वरूपविभाजकधर्मद्वयान्यतरवद्भिन्नेति बोधः।

**संस्कारमात्रजन्यं ज्ञानं स्मृतिः।**

प्रथममनुभवः, ततः भावनाख्यसंस्कारः, ततः उद्बोधकसामग्रीसहितसंस्कारात् स्मृतिरिति क्रमं मनसि कृत्वा स्मृतिलक्षणमाह—संस्कारमात्रेति। मात्रपदस्य इतरयोगः व्यवच्छेदश्च अर्थः। अत्र इतरयोगः इतरजन्यत्वरूपः। अस्य व्यवच्छेदे अन्वयः। तथाच संस्कारेतर-

जन्यत्वाभावविशिष्टसंस्कारजन्यत्वविशिष्टज्ञानत्वं स्मृतेर्लक्षणम्। संस्कारेतरचक्षुराद्यजन्यतया संस्कारजन्यतया ज्ञानत्वेन च स्मृतौ लक्षणसमन्वयः। ज्ञानत्वमात्रोक्तौ अनुभवेऽतिव्याप्तिः। संस्कारजन्यत्वमात्रोक्तौ ध्वंसं प्रति प्रतियोगिनः कारणतया संस्कारमात्रजन्यत्वस्य सत्त्वात् संस्कारध्वंसेऽतिव्याप्तिः। अतो ज्ञानत्वदलम्। तन्निवेशे च ध्वंसे ज्ञानत्वाभावान्नातिव्याप्तिः। संस्कारेतरजन्यत्वाभावविशिष्टज्ञानत्वमात्रोक्तौ अजन्ये ईश्वरज्ञानेऽतिव्याप्तिः। नच ईश्वरज्ञानस्य जन्यत्वविशेषणेनैव वारणसंभवात् संस्कारपदं व्यर्थमिति वाच्यम्। योगिज्ञानेऽतिव्याप्तेः। तस्य योगजन्यत्वात् ज्ञानत्वाच्च। नचैवं योगिज्ञानस्य योगजत्वात् संस्कारेतराजन्यत्वविशेषणेनैवातिव्याप्तिवारणात् संस्कारपदवैयर्थ्यमिति वाच्यम्। स्मृतेरपि संस्कारेतरमनोजन्यत्वेन तदजन्यत्वाभावात् असंभववारणाय संस्कारेतरपदस्य बहिरिन्द्रियपरतया व्याख्येयतया योगिज्ञाने बहिरिन्द्रियाजन्यत्व-जन्यत्व-ज्ञानत्वानां सत्त्वात्तत्रातिव्याप्तेः। अतः तद्वारणाय संस्कारपदं निवेश्यम्। संस्कारजन्यत्वे सति ज्ञानत्वमात्रोक्तौ सोऽयं देवदत्त इति प्रत्यभिज्ञायामतिव्याप्तिः। तस्य इदन्त्वांशे चक्षुरादिजन्यत्वेऽपि तत्तांशे संस्कारजन्यत्वेन संस्कारजन्यत्वज्ञानत्वयोः तत्र सत्त्वात्। मात्रपदनिवेशे तु प्रत्यभिज्ञाया इदन्त्वांशे बहिरिन्द्रियचक्षुर्जन्यतया तदजन्यत्वाभावान्नातिव्याप्तिः। एवंच लौकिकविषयताशून्यत्वे सति संस्कारजन्यत्वे सति ज्ञानत्वमिति निष्कृष्टं लक्षणम्[१]।

**तद्भिन्नं ज्ञानमनुभवः। स द्विविधः यथार्थोऽयथार्थश्च।**

अनुभवं लक्षयति—तद्भिन्नमिति। स्मृतिभिन्नत्वे सति ज्ञानत्वमनुभवस्य लक्षणम्। ज्ञानत्वमात्रोक्तौ स्मृतौ, स्मृतिभिन्नत्वमात्रोक्तौ घटादौ चातिव्याप्तिः। अतो दलद्वयम्। प्रत्यभिज्ञापि अनुभव एवान्तर्भवति, संस्कारमात्रजन्यत्वाभावात्। अनुभवं विभजते—यथार्थोऽयथार्थश्चेति।

१. वस्तुतस्तु संस्कारत्वपर्याप्तावच्छेदकताकसमवायसंबन्धावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वनिवेशे मात्रपदज्ञानपदयोः वैयर्थ्यमेवेति बोध्यम्।



**तद्वति तत्प्रकारकानुभवो यथार्थः। सैव प्रमेत्युच्यते। यथा रजते इदं रजतमिति ज्ञानम्।**

यथार्थानुभवस्य लक्षणमाह—तद्वतीति। यथाभूतः अर्थः यस्मिन्ननुभवे स यथार्थः। यथाभूत इत्यस्य प्रकारविशिष्ट इत्यर्थः। सोऽस्यास्तीति तद्वान्। तद्वतीत्यत्र सप्तम्यर्थः विशेष्यतानिरूपकत्वम्। तद्वतः आधेयत्वसंबन्धेन विशेष्यतायामन्वयः। उभयत्रापि तच्छब्देन प्रकारीभूतधर्मः ग्राह्यः। प्रकारः विशेषणम्। एवंच तद्वन्निष्ठविशेष्यतानिरूपकत्वे सति तन्निष्ठप्रकारतानिरूपकत्वे सति अनुभवत्वं लक्षणं जातम्। तथाच विशेषणवति विशेष्ये विशेषणविशिष्टज्ञानं यथार्थानुभव इति फलितम्। रजते इदं रजतमिति ज्ञाने तत्पदग्राह्यं रजतत्वम्। तद्वत् रजतम्। तन्निष्ठविशेष्यतानिरूपकत्वे सति तत्पदग्राह्यरजतत्वनिष्ठप्रकारतानिरूपकत्वे च सति अनुभवत्वस्य सत्त्वाल्लक्षणसमन्वयः। अनुभवत्वमात्रोक्तौ अयथार्थानुभवेऽतिव्याप्तिः। अनुभवत्वानुपादाने इदं रजतमिति यथार्थानुभवजन्यस्मृतिसंस्कारयोरतिव्याप्तिः। तत्रापि तद्वद्विशेष्यकत्वतत्प्रकारकत्वयोः सत्त्वात्। तद्वद्विशेष्यकत्वे सति अनुभवत्वमात्रोक्तौ शुक्तौ इदं रजतमिति अयथार्थानुभवेऽतिव्याप्तिः। तत्प्रकारकत्वदलाभावे तत्पदेन प्रकार एव ग्राह्यः इति नियमालाभेन तच्छब्देन शुक्तित्वे गृहीते शुक्तित्ववद्विशेष्यकत्वानुभवत्वयोः सत्त्वादिति तत्प्रकारकत्वपदम्। तन्निवेशे च एकत्रोच्चरितयोः तच्छब्दयोः एकार्थबोधकत्वमिति नियमेन प्रथमगृहीततत्पदार्थस्यैव द्वितीयतत्पदेनापि ग्राह्यतया प्रथमतत्पदगृहीतशुक्तित्वप्रकारकत्वस्य निरुक्तानुभवेऽभावात् नातिव्याप्तिः। तत्प्रकारकत्वे सत्यनुभवत्वमात्रोक्तौ शुक्तौ इदं रजतमिति भ्रमे तत्पदग्राह्यरजतत्वप्रकारकत्वे सत्यनुभवत्वस्य सत्त्वादतिव्याप्तिः। अतः तद्वद्विशेष्यकत्वम्। तन्निवेशे तु तत्पदगृहीतरजतत्ववद्रजतविशेष्यकत्वस्यासत्त्वान्नातिव्याप्तिः। तद्वत्त्वं च प्रकारतावच्छेदकसंबन्धेन ग्राह्यम्। तेन कालिकसंबन्धेन शुक्त्यादौ रजतत्वसत्त्वेऽपि पूर्वोक्तभ्रमे नातिव्याप्तिः।

नतु रंगरजतयोः इमे रजतरंगे इति समूहालंबनभ्रमे अतिव्याप्तिः। तत्र रंगत्ववतो रजतत्ववतश्च विशेष्यत्वात्, रंगत्वरजतत्वयोश्च प्रकारत्वात् तद्वन्निष्ठेत्यादिलक्षणस्याव्याहतत्वादिति चेत्, न; तद्वन्निष्ठविशेष्यता-निरूपिततन्निष्ठप्रकारतानिरूपितप्रकारित्वे सत्यनुभवत्वस्य विवक्षितत्वात्। अत एव तद्वद्विशेष्यकतत्प्रकारकेत्यनुक्त्वा तद्वति तत्प्रकारकेत्यादि उक्तम्। सप्तम्यर्थविशेष्यतानिरूपकत्वस्य प्रकारपदार्थैकदेशप्रकारतायाम् आश्रयतया अन्वयः। नहि तादृशभ्रमे रजतत्वनिष्ठप्रकारता रजतनिष्ठविशेष्यता-निरूपिता, किन्तु रंगनिष्ठविशेष्यतानिरूपिता। यस्य यदंशे प्रकारत्वं तन्निष्ठप्रकारतायाः तन्निष्ठविशेष्यतानिरूपितत्वमिति नियमात्। न हि रजतत्वं रजतांशे प्रकारः, किन्तु रंगांशे। अतो नातिव्याप्तिः। न चैवमपि पर्वतो वह्निमान्, ह्रदो वह्निमान्, इति समूहालंबनभ्रमे पुनरप्यतिव्याप्तिः। अत्र पर्वतो वह्निमानित्यंशस्य यथार्थतया वह्निमत्पर्वतनिष्ठ-विशेष्यतानिरूपितवह्निनिष्ठप्रकारतानिरूपितप्रकारित्वस्य सत्त्वादिति वाच्यम्। भ्रमभिन्नत्वेनाप्यनुभवस्य विशेषणीयत्वात्। तद्ज्ञानस्य ह्रदांशे वह्न्यवगाहित्वेन भ्रमरूपतया भ्रमभिन्नत्वस्याभावात्। एवमपि निर्विकल्पक-प्रत्यक्षे प्रकारताविशेष्यतयोरभावात् तद्वद्विशेष्यकत्वतत्प्रकारकत्वयोर-संभवात् अव्याप्तिरिति चेत्, सत्यम्। तद्वद्विशेष्यतानिरूपिततन्निष्ठप्रकारता-शालिज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। निर्विकल्पक-प्रत्यक्षे प्रकारत्वविशेष्यत्वयोरसत्त्वेऽपि तद्वद्विशेष्यकतत्प्रकारकज्ञानवृत्त्यनु-भवत्वव्याप्ययथार्थानुभवत्वजातेः सत्त्वान्नाव्याप्तिः। वस्तुतस्तु "न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम्" इति वचनात् सिद्धान्ते निर्विकल्पके प्रमात्वभ्रमत्वयोरनंगीकारात् न तत्रालक्ष्येऽव्याप्तिशंकावकाशः।[1]

१ इदं च संग्रहकर्तुः नाभिमतम्, यतः सः अनुभवं द्वेधा विभजते 'यथार्थः अयथार्थश्चेति' इति। नो चेत् निर्विकल्पकमपि पृथगुक्त्वा त्रिधा विभजेत। अत एव च निर्विकल्पकस्य प्रत्यक्षप्रमायामेवान्तर्भावं मनसि कृत्वा "इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। तत् द्विविधं निर्विकल्पकं सविकल्पकं चेति" इति वक्ष्यत्युपरिष्टात्।



अत्र बालबोधार्थं विषयतादिकमधिकृत्य किंचिद्विचार्यते। विषयता त्रिविधा, विशेष्यता प्रकारता संसर्गता चेति। प्रकारता- विशेषण-तेत्यनर्थान्तरम्। संयोगसंबन्धेन घटवद् भूतलम् इत्यत्र भूतले ज्ञाननिरूपिता विशेष्यता। घटे प्रकारता। संयोगसंबन्धे संसर्गता। एवमेव सविषय-गुणपंचकेऽपि तत्तन्निरूपितविषयतात्रयं बोध्यम्। अनुमितिनिरूपित-विशेष्यताप्रकारतयोः प्रत्येकम् उद्देश्यतात्वविधेयतात्वाभ्यां व्यवहारः। यथा पर्वतो वह्निमानित्यत्र पर्वतनिष्ठाया विशेष्यतायाः उद्देश्यतात्वेन, वह्निनिष्ठप्रकारतायाः विधेयतात्वेन च व्यवहारः। निर्विकल्पकज्ञाने एतद्विषयतात्रयं नांगीक्रियते। तत्र घट इत्यादिसविकल्पकादव्यवहितपूर्वं जायमाने घटादिविषयकनिर्विकल्पकप्रत्यक्षे विषयीभूतेषु घटघटत्वतत्समवायेषु तुरीयविषयता त्रिष्वपि प्रत्येकं एकैवाङ्गीक्रियते। कृतिनिरूपिताः अन्याश्च उद्देश्यताविधेयतोपादानताख्यास्तिस्रो विषयताश्च सन्ति। यथा जलानयनाय कपालाभ्यां घटमहं कुर्याम् इत्यत्र जलानयने उद्देश्यता, कपालयोरुपादानता, घटे विधेयता चेति इति संक्षेपः।

ननु ग्रन्थान्तरे प्रमाऽप्रमाभेदेन विभागः कृतः, कथमत्र न तथा कृत इत्यत्र आह-सैवेति। सैवेत्येवकारेणायथार्थानुभवव्यवच्छेदः। यद्वा तद्वति तत्प्रकारकत्वेनानुभवसजातीययथार्थस्मृतिव्यवच्छेदः। स्मृतेः यथार्थत्वेऽपि न प्रमात्वमङ्गीक्रियत इति तात्पर्यम्। अथ बोधः। सा = यथार्थानुभवः। इतिशब्दस्यार्थः आनुपूर्वी। प्रमापदं प्रमाशब्दार्थकम्। तस्यानुपूर्व्यामाधेय-तासंबन्धेनान्वयः। उच्यत इत्यत्र धात्वर्थः शब्दप्रयोगः। तदेकदेशशब्दे इत्यर्थस्याश्रयतासंबन्धेनान्वयः। शब्दप्रयोगस्य च कर्मप्रत्ययार्थविषयतायां, तस्याश्च आश्रयतया तत्पदार्थे अन्वयः। तथा च प्रमाशब्दनिष्ठानुपूर्व्याश्रयशब्द-प्रयोगविषयताश्रयः यथार्थानुभवः इति॥

ननु सेति स्त्रीलिंगनिर्देशः कथम्? पूर्वं पुंलिङ्गनिर्देशात् इति चेत्, यथा 'शैत्यं हि यत्सा प्रकृतिर्जलस्ये' त्यादौ पूर्वं नपुंसक-निर्दिष्टमपि स्त्रीलिंगशब्देन परामृश्यते। विधेयप्राधान्यात्। तथा अत्रापि। क्वचित् स एव प्रमेत्युच्यत इति पुंलिङ्गपाठोऽपि दृश्यते॥

**तदभाववति तत्प्रकारकानुभवः अयथार्थः। सैवाप्रमेत्युच्यते। यथा शुक्तौ इदं रजतमिति ज्ञानम्।**

अयथार्थानुभवं लक्षयति—तदभाववतीति। अयथाभूतः अर्थः अयथार्थः। अयथेत्यस्य प्रकारशून्य इत्यर्थः। प्रकारशून्यवस्तुविषयकः इति यावत्। अत्र सप्तम्यर्थः विशेष्यतानिरूपितविशेष्यित्वम्। तदभाववतः आधेयत्वसंबन्धेन विशेष्यतायामन्वयः। तथा च तदभाववन्निष्ठविशेष्यतानिरूपितविशेष्यित्वे सति तन्निष्ठप्रकारतानिरूपितप्रकारित्वे सति अनुभवत्वं लक्षणम्। रंगे इदं रजतमिति ज्ञाने तत्पदेन प्रकारीभूतं रजतत्वं ग्राह्यम्। तदभावः रजतत्वाभावः। तद्वत् रङ्गम्। तन्निष्ठविशेष्यतानिरूपकत्वस्य रजतत्वनिष्ठप्रकारतानिरूपकत्वस्य अनुभवत्वस्य च तत्र सत्त्वाल्लक्षणसमन्वयः। अनुभवत्वमात्रोक्तौ यथार्थानुभवेऽतिव्याप्तिः। अनुभवत्वानुपादाने अयथार्थस्मृत्यादावतिव्याप्तिः। तदभाववद्विशेष्यकत्वे सति अनुभवत्वमात्रोक्तौ रजते इदं रजतमिति यथार्थानुभवेऽतिव्याप्तिः। तत्पदेन रंगत्वस्य ग्रहणे तदभाववत् रजतं तद्विशेष्यकत्वे सति अनुभवत्वस्य तत्र सत्त्वात्। तत्प्रकारकत्वस्य निवेशे तु रंगत्वप्रकारकत्वस्य पूर्वोक्तज्ञानेऽभावान्नातिव्याप्तिः। तत्प्रकारकत्वे सत्यनुभवत्वमात्रोक्तौ रजते इदं रजतमिति प्रमायां पुनरप्यतिव्याप्तिः। तत्र तत्पदग्राह्यरजतत्वप्रकारकत्वानुभवत्वयोः सत्त्वात्। तदभाववद्विशेष्यकत्वनिवेशे तु रजतत्वाभाववद्विशेष्यकत्वस्य तत्राभावान्नातिव्याप्तिः। एवमपि वृक्षः कपिसंयोगी, पर्वतो वह्निमानिति प्रमायां चातिव्याप्तिः। वृक्षः कपिसंयोगीत्यत्र मूलदेशावच्छेदेन तदभाववद्विशेष्यकत्वस्य पर्वतो वह्निमानित्यत्र समवायेन पर्वते वह्न्यभावात् समवायसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववद्विशेष्यकत्वस्य च सत्त्वात्। अतः तदभावः निरवच्छिन्नवृत्तिकः प्रकारतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकश्च ग्राह्यः। तथा च वृक्षः कपिसंयोगीत्यत्राभावः मूलदेशावच्छिन्नवृत्तिकः, न तु निरवच्छिन्नवृत्तिकः। पर्वतो वह्निमानित्यत्र समवायसंबन्धः न प्रकारतावच्छेदकः, किन्तु संयोग इति नातिव्याप्तिः। ननु यदभावस्य निरवच्छिन्नवृत्तिकत्वं निवेश्यते तर्हि मूलावच्छेदेन वृक्षः कपिसंयोगीति



भ्रमेऽव्याप्तिः, कपिसंयोगाभावस्य सावच्छिन्नवृत्तिकत्वात् इति चेत्, न; यदवच्छेदेन यस्मिन् यदभावः तदवच्छेदेन तस्मिन् तत्प्रकारकत्वमिति परिष्कारे तात्पर्यात्।

ननु रंगरजतयोः इमे रङ्गरजते इति समूहालंबनप्रमायाम् अतिव्याप्तिः। तत्र रजतत्वाभाववतो रङ्गत्वाभाववतश्च विशेष्यत्वात् रजतत्वरंगत्वयोः प्रकारत्वाच्चेति चेत्, न; तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारतानिरूपितप्रकारित्वे सत्यनुभवत्वस्य विवक्षितत्वादिति संक्षेपः॥

**यथार्थानुभवश्चतुर्विधः प्रत्यक्षानुमित्युपमितिशाब्दभेदात्। तत्करणमपि चतुर्विधं प्रत्यक्षानुमानोपमानशब्दभेदात्।**

यथार्थानुभवं विभजते–यथार्थेति। तत्करणं विभजते–प्रत्यक्षेति।

**व्यापारवदसाधारणं कारणं करणम्।**

करणलक्षणमाह—व्यापारवदिति। व्यापारवत्त्वं व्यापारजनकत्वम्। व्यापारजनकत्वे सत्यसाधारणकारणत्वं करणलक्षणम्। असाधारणकारणत्वं च कार्यत्वव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणत्वम्। दण्डः घटं प्रति असाधारणं कारणम्। तथा हि—कार्यत्वव्याप्यो धर्मः, अत्र घटत्वरूपो धर्मः। तद्धर्मावच्छिन्ना कार्यता, घटे वर्तमाना कार्यता। तन्निरूपिता कारणता, दण्डे वर्तमाना कारणता। तदाश्रयत्वं भ्रमणरूपव्यापारजनकत्वं च दण्डे इति लक्ष्ये लक्षणसमन्वयः। तदेव साधकतमं करणमित्युपदिष्टम्। तज्जन्यत्वे सति तज्जन्यजनको व्यापारः। तत्पदं कारणत्वेनाभिमतपरम्। अत्रासाधारणकारणत्वमात्रोक्तौ घटं प्रति भ्रमणरूपव्यापारस्यासाधारणकारणत्वेन तत्रातिव्याप्तिः। व्यापारजनकत्वनिवेशे तु व्यापारे व्यापारजनकत्वाभावान्नातिव्याप्तिः। व्यापारजनकत्वमात्रोक्तौ तु ईश्वरादृष्टादेः कार्यमात्रं प्रति हेतुतया व्यापारजनकत्वस्याप्यक्षततया तत्रातिव्याप्तिः। असाधारणकारणत्वनिवेशे तु ईश्वरादृष्टादेः कार्यमात्रं प्रति

साधारणकारणतया असाधारणकारणत्वाभावान्नातिव्याप्तिः। अतः उभयोपादानम्[१]।

[२]अनन्यथासिद्धत्वे सति कार्यनियतपूर्ववृत्ति कारणम्। यथा घटादिकं प्रति दण्डादिः।

कारणं लक्षयति—अनन्यथासिद्धेति। अनन्यथासिद्धत्वे सति कार्यनियतपूर्ववृत्तित्वं कारणस्य लक्षणम्। कार्यनियतपूर्ववृत्तित्वं च कार्यनियतत्वे सति कार्यपूर्ववृत्तित्वम्। कार्यनियतत्वं च कार्यव्यापकत्वम्। तच्च कार्यतावच्छेदकसंबन्धेन कार्याधिकरणे कार्याव्यवहितप्राक्क्षणावच्छेदेन वर्तमानात्यन्ताभावीयकारणतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकधर्मवत्त्वम्। अनन्यथासिद्धत्वं च अन्यथासिद्धभिन्नत्वम्। अन्यथासिद्धत्वं च क्लृप्तकारणबहिर्भूतत्वम्। एवं च क्लृप्तकारणान्तर्गतत्वे[३] सति कार्यव्यापकत्वं लक्षणं पर्यवसितम्। अत्र घटकारणे दण्डे घटं प्रति क्लृप्तकारणान्तर्गतत्वं वर्तते। कार्यं घटः। तदधिकरणं कपालः। तत्र घटस्य संबन्धः समवायः। एवं च समवायरूपकार्यतावच्छेदकसंबन्धेन कार्याव्यवहितप्राक्क्षणावच्छेदेन वर्तमानः यः अभावः इत्युक्ते स्वजन्यभ्रमिजन्यभ्रमिमत्त्वसंबन्धेन दण्डो नास्तीत्याकारकप्रतीतिविषयाभावो न ग्रहीतुं शक्यते। कुतः? स्वं दण्डः। स्वजन्या भ्रमिः चक्रभ्रमिः। तज्जन्या भ्रमिः कपालभ्रमिः। तद्वान् कपालः। तद्वत्तासंबन्धेन कपाले दण्डस्य वर्तमानत्वात्। एवं च उदासीनपटाद्यभाव एव तथा भवति। तत्प्रतियोगितावच्छेदकं पटत्वादिकम्। अनवच्छेदकधर्मः दण्डत्वम्। तद्वत्त्वं दण्डे वर्तत इति समन्वयः। कार्यपूर्ववृत्तित्वमात्रोक्तौ रासभादावतिव्याप्तिः। व्यापकत्वनिवेशे च कार्याधिकरणकपाले निरुक्तसंबन्धेन रासभस्यासत्त्वात् तत्प्रतियोगित्वमेव रासभे। कार्यव्यापकत्वमात्रोक्तौ कार्याधिकरणकपाले समवायसंबन्धेन कार्यभूतघटस्य सत्त्वात् तत्र न घटाभावः, किन्तु पटाद्यभाव एव। अतः तदप्रतियोगित्वं घट इति कारणलक्षणस्य कार्ये अतिव्याप्तिः। तद्वारणाय पूर्ववृत्तित्वदलम्। स्वपूर्ववृत्तित्वस्य कार्ये असंभवान्नातिव्याप्तिः। अनन्यथासिद्धत्वानिवेशे दण्डरूपादावतिव्याप्तिः। तत्र स्वाश्रयदण्डजन्यभ्रमिजन्यभ्रमिमत्त्वसंबन्धेन कार्यव्यापकत्वकार्यपूर्ववृत्तित्वयोः सत्त्वात्। तन्निवेशे तु दण्डरूपादीनां घटकारणत्वेन क्लृप्तेषु दण्डचक्रसलिलकुलालादिष्वनन्तर्भूतत्वात् अन्यथासिद्धत्वेन तद्भिन्नत्वासंभवान्न दोषः। यत्तु कार्यानुकृतान्वयव्यतिरेकि कारणमिति कैश्चिदुक्तम्,

---

१ वस्तुतस्तु दीपिकायां व्यापारवत्पदस्य प्रयोजनानुक्त्या 'असाधारणं कारणं करणम्' इत्येतावदेव करणलक्षणं मूलकृदभिमतम्। अत एव "करणलक्षणमाह—असाधारणमिति। व्यापारवदसाधारणं कारणं करणमित्यर्थः।" इति न्यायबोधिनीव्याख्याशैली संगच्छते। एतादृशलक्षणमभिप्रेत्यैव मूलकृदग्रे वक्ष्यति "तस्माल्लिङ्गपरामर्शोऽनुमानमिति"।

२ अत्र "पूर्ववृत्ति कारणमित्युक्ते रासभादावतिव्याप्तिः स्यात्। अतो नियतेति। तावन्मात्रे कृतेऽपि कार्येऽतिव्याप्तिः। अतः पूर्ववृत्ति इति। ननु तन्तुरूपमपि पटं प्रति कारणं स्यादिति चेत्, न, अनन्यथासिद्धत्वे सतीति विशेषणात्" इति दीपिकाग्रन्थेन, "नियतपूर्ववर्तिनो दण्डरूपादेरपि घटकारणत्वं स्यात्। अतः अनन्यथासिद्धपदमपि कारणलक्षणे निवेशनीयम्" इति न्यायबोधिन्या च 'कार्यनियतपूर्ववृत्ति कारणम्' इत्येव तर्कसंग्रहपाठः अन्नंभट्टाभिमतः इति प्रतिभाति।

३ क्लृप्तकारणान्तर्गतत्वे सति इति। अत्रेदमवधेयम्—यदीदृशरीत्या अनन्यथासिद्धत्वं कारणपदघटितं कारणलक्षणे निवेश्यते तदा आत्माश्रयः इति अवश्यक्लृप्तनियतपूर्ववर्तिभिन्न लघुनियतपूर्ववर्तिभिन्नत्वरूपे पर्यवसन्नमेवान्यथासिद्धत्वं, तद्भिन्नत्वमनन्यथासिद्धत्वम्, तदेव लक्षणघटकमिति वक्तव्यम्। तत्रापि अनियतपूर्ववर्तिनां नियतपूर्ववर्तित्वदलेनैव वारणात्, अनन्यथासिद्धत्वं लाघवमात्रे पर्यवसन्नम्। तादृशलाघवं च उपस्थिति-शरीर-सम्बन्धभेदेन नानात्वान्नानुगतमिति तत्कार्यनियतपूर्ववर्तित्वे सति तत्कार्यकारणत्वेनाव्यवह्रियमाणा ये तद्भिन्नत्वमिति परिचायकवाक्योपलक्षितं तत्तद्भिन्नत्वमेव कारणपदाघटितमनन्यथासिद्धत्वं लक्षणघटकमिति।

तन्न सम्यक्। नित्यविभूनां कालतो देशतश्च व्यतिरेकाभावेनाकारणत्वप्रसंगात्॥

## कार्यं प्रागभावप्रतियोगि।

कारणशब्दार्थनिरूपणनिर्दिष्टं कार्यं किमित्यत्राह—कार्यमिति। प्रागभावस्य प्रतियोगि इति विग्रहः। षष्ठ्यर्थो निरूपितत्वं प्रतियोगिन्यन्वयि। यत् प्रागभूत्वा पश्चात् भवति तत् कार्यम्। कारणलक्षणे पूर्ववृत्तित्वेन यत्प्रतियोगिकप्रागभावाधिकरणकालवृत्तित्वं कारणस्य गृह्यते तत् कार्यमिति विवेकः। कार्योत्पत्तेः पूर्वं वर्तमानः भविष्यतीति प्रतीतिविषयः प्रागभावः। तत्प्रतियोगित्वं कार्ये घटादौ इति समन्वयः। तथा च उत्पत्तिमत्त्वम् इति कार्यलक्षणं पर्यवसन्नम्। अभावप्रतियोगित्वमात्रोक्तौ गगनाभावप्रतियोगित्वमादाय गगनेऽतिव्याप्तिः। अतः प्रागभावेति। गगनस्य प्रागभावाभावान्नातिव्याप्तिः। नन्वेवं प्रागभावेऽव्याप्तिरिति चेत्, इष्टापत्तेः। उत्पत्तिमत्त्वेन ध्वंसस्य कार्यत्वाभ्युपगमेऽपि प्रागभावस्य तत्त्वानभ्युपगमात्॥

**कारणं त्रिविधं समवाय्यसमवायिनिमित्तभेदात्। यत्समवेतं कार्यम् उत्पद्यते तत् समवायिकारणम्। यथा तन्तवः पटस्य। पटश्च स्वगतरूपादेः।**

कारणं विभजते—कारणमिति। समवायिकारणलक्षणमाह—यत्समवेतमिति। येषु समवेतं यत्समवेतम्। निरूपितत्वं सप्तम्यर्थः। येषु तन्त्वादिषु समवेतं समवायसंबन्धेन स्थितं सत् कार्यं पटादिरूपं कार्यम् उत्पद्यते, तत् तन्त्वादिकं तत्पटादिकं प्रति समवायिकारणम्। कार्यकारणयोः सर्वत्र सामानाधिकरण्यस्यापेक्षितत्वात् सामानाधिकरण्यनिरूपके एकस्मिन्नधिकरणे येन येन संबन्धेन कार्यकारणयोः स्थितिः तयोः संबन्धयोः क्रमेण कार्यतावच्छेदककारणतावच्छेदकसंबन्धरूपतया घटस्य कपाले समवायसंबन्धेन, कपाले कपालस्य तादात्म्यसंबन्धेन च, कपालात्मकैकाधिकरणे विद्यमानतया समवायसंबन्धावच्छिन्न-



कार्यनिष्ठकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणताश्रयत्वं समवायिकारणलक्षणं भवति। समवायसंबन्धावच्छिन्नघटत्वपटत्वाद्यवच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकपालत्वतन्तुत्वाद्यवच्छिन्नकारणताश्रयत्वस्य घटपटादिसमवायिकारणकपालतन्त्वादिषु वर्तमानतया लक्षणसमन्वयः। कार्यतायां समवायसंबन्धावच्छिन्नत्वानिवेशे विषयतासंबन्धेन जायमानघटप्रत्यक्षं प्रति तादात्म्यसंबन्धेन घटस्य कारणतया घटप्रत्यक्षनिमित्तकारणे घटेऽतिव्याप्तिः। विषयतासंबन्धावच्छिन्नघटप्रत्यक्षत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणतायाः घटे सत्त्वात्। कारणतायां तादात्म्यसंबन्धावच्छिन्नत्वानिवेशे पटाद्यसमवायिकारणीभूततन्तुसंयोगादौ समवायसंबन्धावच्छिन्नपटत्वाद्यवच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणताश्रयत्वसत्त्वादतिप्रसंगः। गुणात्मककार्यस्थलमुदाहरति-पटश्चेति। आदिना क्रियापरिग्रहः। तथा च अवयविद्रव्यं प्रत्येवावयवद्रव्यं समवायिकारणम् इति न, किन्तु द्रव्यमेव भावकार्याणां द्रव्यगुणकर्मणां समवायिकारणमिति तात्पर्यम्। ननु यदैव घटादयो जायन्ते तदैव तद्गतरूपादयः अपि। अतः समानकालिकत्वात् गुणगुणिनोः सव्येतरविषाणवत् कार्यकारणभाव एव नास्ति, पौर्वापर्याभावात्। अतो न समवायिकारणं घटादयः स्वगतरूपादीनाम्, कारणविशेषत्वात्समवायिकारणस्येति चेत्, न; यतः गुणगुणिनोः न समानकालिकं जन्म। किन्तु द्रव्यं निर्गुणमेव प्रथममुत्पद्यते। पश्चात्तत्समवेता गुणा उत्पद्यन्ते। समानकालोत्पत्तौ तु गुणगुणिनोः समानसामग्रीकत्वात् भेदो न स्यात्। कारणभेदनियतत्वात् कार्यभेदस्य। तस्मात् प्रथमे क्षणे निर्गुणा एव घटादयः जायन्ते। गुणेभ्यः पूर्वभावित्वात् उपपद्यते च तेषां समवायिकारणता। एवं च कारणभेदोऽपि निर्वहति। घटो हि घटं प्रति न कारणम्, एकस्यैव पौर्वापर्याभावात्। न हि स्व एव स्वं प्रति पूर्वभावी पश्चाद्भावी च। स्वगुणान् प्रति पूर्वभावित्वात् भवति तान् प्रति समवायिकारणं द्रव्यम्। एवमेव कर्म प्रति च। नन्वेवं सति प्रथमे क्षणे घटश्चाक्षुषो न स्यात्, अरूपिद्रव्यत्वात्,

वायुवत्। तदेव हि द्रव्यं चाक्षुषम्, यन्महत्त्वे सत्युद्भूतरूपवत्। अद्रव्यं च स्यात्, गुणाश्रयत्वाभावात्। गुणाश्रयो द्रव्यमिति हि द्रव्यलक्षणम् इति चेत्, सत्यम्। प्रथमे क्षणे घटो यदि चक्षुषा न गृह्यते, तदा का नो हानिः? न हि सगुणोत्पत्तिपक्षे प्रथमक्षणे घटादिः प्रत्यक्षः, विषयतासंबन्धेन प्रत्यक्षं प्रति तादात्म्येन विषयस्य कारणतया कारणत्वस्य नियतपूर्ववृत्तित्वात् घटादौ तदभावात्। तेन व्यवस्थितमेतत् निर्गुण एव घटः प्रथमम् उत्पद्यते, द्वितीयादिक्षणेषु[1] चक्षुषा गृह्यते इति। न च प्रथमक्षणे गुणाश्रयत्वाभावात् अद्रव्यत्वापत्तिः। समवायिकारणं द्रव्यमिति द्रव्यलक्षणयोगात् योग्यतया गुणाश्रयत्वाच्च। योग्यता च गुणात्यन्ताभावाभावः॥

**कार्येण कारणेन वा सह एकस्मिन्नर्थे समवेतं सत्कारणम् असमवायिकारणम्। यथा तन्तुसंयोगः पटस्य, तन्तुरूपं पटगतरूपस्य च।**

असमवायिकारणलक्षणमाह—कार्येणेत्यादि। न समवायि असमवायि इति विग्रहः। समवायीत्यस्य समवायानुयोगीत्यर्थः। तद्भिन्नमसमवायि समवायप्रतियोगि। आधारा अनुयोगिनः, आधेयाः प्रतियोगिनः, इति सामान्यतः संबन्धिनां प्रतियोग्यनुयोगिभावस्वीकारात्। समवायप्रतियोगीत्यनेन समवेतमिति लभ्यते। तत्र च कुत्र समवेतमित्याकांक्षायां कार्ये समवेतमिति वक्तुं नोचितम्। कार्ये समवेतत्वस्य कार्योत्पत्त्यनन्तरभावितया कार्यं प्रति कारणत्वासंभवात्। अतः कार्यकारणे तत्कारणे वा समवेतं कारणम् असमवायिकारणमिति वक्तव्यमित्यभिप्रेत्याह—कार्येणेति। कार्येण सहैकस्मिन्नर्थे समवेतं सत्कारणम् असमवायिकारणमित्येकम्। कारणेन सहैकस्मिन्नर्थे समवेतं सत्कारणम् असमवायिकारणमित्यपरम्। तथाच कार्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च असमवायिकारणं द्विविधमिति भावः। घटं प्रति कपालद्वयसंयोगः, पटं प्रति तन्तुसंयोगः, इत्यादिकं प्रथमम्।

---

१ वस्तुतस्तु चक्षुःसंयोगस्य गुणत्वेन तस्य घटे द्वितीयक्षण एव उत्पत्तुं शक्यतया तृतीयक्षण एव घटादिप्रत्यक्षम्।



कार्यघटपटादिना सह एकस्मिन्नर्थे कपालतन्त्वाद्यर्थे समवेतं सत् समवायसंबन्धेन स्थितं सत् कारणं कपालद्वयसंयोगतन्तुसंयोगादिकं घटपटादिकं प्रत्यसमवायिकारणम् इति योजना। कार्यकारणयोः घटकपालद्वयसंयोगयोः कपाले एकाधिकरणे, तथा पटतन्तुसंयोगयोः तन्तौ एकाधिकरणे समवायघटितसामानाधिकरण्यस्य सत्त्वात् समवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणताश्रयत्वं प्रथमासमवायिकारणलक्षणं सुस्थितम्। समवायसंबन्धावच्छिन्नपटत्वाद्यवच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नतन्तुसंयोगत्वाद्यवच्छिन्नकारणताश्रयत्वस्य तन्तुसंयोगादौ सत्त्वात्समन्वयः। कार्यतायां समवायसंबन्धावच्छिन्नत्वानिवेशे घटप्रत्यक्षनिमित्तकारणीभूतघटरूपे विषयतासंबन्धावच्छिन्नघटप्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणतामादायातिव्याप्तिः। कारणतायां समवायसंबन्धावच्छिन्नत्वानिवेशे तादात्म्यसंबन्धावच्छिन्नकारणतामादाय समवायिकारणेऽतिव्याप्तिः। अतः उभयत्र तत्तत्संबन्धनिवेशः।

द्वितीयासमवायिकारणलक्षणे कारणेनेत्यस्य स्वकार्यसमवायिकारणेनेत्यर्थः। स्वं तन्तुरूपम्। स्वकार्यं पटगतरूपम्। तत्समवायिकारणं पटः। तेन सह एकस्मिन्नर्थे तन्तौ समवेतं कारणं तन्तुरूपं भवतीत्यर्थलाभेन तन्त्वन्तर्भावेण अनयोः सामानाधिकरण्यस्य सत्त्वात् स्वाश्रयसमवायित्वसंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणताश्रयत्वम् इति मूलतो लक्षणं लभ्यते। तस्य च चित्ररूपं प्रति असमवायिकारणेषु नानावयवरूपेषु कार्यतावच्छेदकसंबन्धेन कार्याधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वरूपकार्यव्यापकत्वम् अवयवरूपेषु न भवति इत्यव्याप्तिः। तथाहि—कार्यतावच्छेदकसंबन्धः इत्यनेन स्वाश्रयसमवायित्वसंबन्धः गृह्यते। तेन संबन्धेन कार्याधिकरणे नीलपीताद्यवयवेषु कारणतावच्छेदकसमवायसंबन्धेन नीलरूपावयवे रूपान्तराभावः इत्येवं चालिनीन्यायेन तत्तद्रूपाभावानां सत्त्वेन तदप्रतियोगित्वस्यावयवगतशुक्लपीतादिरूपेष्वभावात्। अतः समवायसंबन्धावच्छिन्नकार्यतानिरूपितस्वाश्रयसमवेतत्वसंबन्धावच्छिन्नकारणताश्रयत्वमिति लक्षणं वक्तव्यम्।

एवं च कार्यतावच्छेदकसंबन्धेन कार्याधिकरणे पटे स्वाश्रयसमवेतत्व-

संबन्धेन अवयवनीलपीतादितन्तुगतनानारूपाणां सत्त्वान्न पूर्वोक्तदोषः। तथाच समवायसंबन्धावच्छिन्नकार्यतानिरूपितस्वसमवायिसमवेतत्वसंबन्धावच्छिन्नकारणताश्रयत्वमिति निष्कृष्टं लक्षणं द्वितीयासमवायिकारणस्य। स्वं तन्त्वादिरूपम्। स्वसमवायि तन्त्वादिकम्। तत्समवेतः पटः। तत्समवेतत्वं पटरूपे। पूर्वलक्षणे पटरूपतन्तुरूपयोः सामानाधिकरण्यं तन्त्वाद्यवयवेषु, निष्कृष्टलक्षणे तु पटाद्यवयविष्विति विशेषः। एवं च समवायसंबन्धावच्छिन्नपटरूपत्वाद्यवच्छिन्नकार्यतानिरूपितस्वसमवायिसमवेतत्वसंबन्धावच्छिन्नतन्तुरूपत्वाद्यवच्छिन्नकारणताश्रयत्वं तन्तुरूपादिष्विति समन्वयः। अत्र कार्यतायां समवायसंबंधावच्छिन्नत्वानिवेशे घटगतरूपप्रत्यक्षनिमित्तकारणमहत्त्वे विषयतासंबन्धावच्छिन्ननिरुक्तप्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितस्वसमवायिसमवेतत्वसंबन्धावच्छिन्नकारणतायाः सत्त्वादतिव्याप्तिः। कारणतायां स्वाश्रयसमवेतत्वानिवेशे समवायिप्रथमासमवायिकारणयोः अतिप्रसंगः। वस्तुतस्तु चित्ररूपादिस्थले लक्षणसमन्वयायैवैकशब्दः। कार्येण कारणेन वा समवेतमित्येतावतैव चित्ररूपादिव्यतिरिक्तस्थले समन्वयात्। चित्ररूपादिस्थले तु कारणम् अवयवगतनानारूपादि। कार्यं पटगतचित्ररूपादि। तत्र स्वकार्यचित्ररूपसमवायिकारणपटेन सह एकस्मिन् अवयवे तन्तुरूपस्य समवेतत्वात् लक्षणं सुस्थितम् इति पूर्वोक्तलक्षणपरिष्कारप्रयासो नास्तीत्यादिकं स्वयमूह्यम्॥

**तदुभयभिन्नं कारणं निमित्तकारणम्। यथा तुरीवेमादिकं पटस्य। तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम्।**

निमित्तकारणं लक्षयति—तदुभयेति। तयोरुभयम्, तस्मात् भिन्नम् इति विग्रहः। घटितत्वं षष्ठ्यर्थः। पंचम्यर्थः प्रतियोगिकत्वं भेदेऽन्वेति। समासे उभयपदं समवायिकारणप्रतियोगिकासमवायिकारणप्रतियोगिकपरम्। अभेदेन भेदे तदन्वयः। निमित्तकारणं निमित्तकारणशब्दवाच्यम्। तथा च समवायिकारणप्रतियोगिकभेदवत्त्वे सति असमवायिकारणप्रतियोगिकभेदवत्त्वे सति कारणत्वं निमित्तकारणलक्षणम्। पटं प्रति निमित्तकारणतुरीवेमादिषु पटसमवाय्यसमवायिकारणतन्तुतत्संयोगादिभिन्नत्वस्य



कारणत्वस्य च सत्त्वात्समन्वयः। समवाय्यसमवायिकारणयोः कारणत्वशून्यपारिमाण्डल्यादिषु च अतिव्याप्तिवारणाय क्रमेण दलत्रयम्। न चैवमपि घटनिमित्तकारणदण्डस्य स्वीयरूपादिकं प्रति समवायिकारणत्वेन तत्र समवायिकारणभिन्नत्वाभावात् अव्याप्तिरिति वाच्यम्। प्रकृतकार्यसमवाय्यसमवायिकारणभिन्नत्वनिवेशेन दोषाभावात्। अथवा समवायिकारणताभिन्ना असमवायिकारणताभिन्ना च या कारणता तदाश्रयत्वस्य विवक्षितत्वात् न दोषः। कारणशब्दार्थं सामान्यतो विशेषतश्च निरूप्य तद्घटितकरणलक्षणमुपसंहरति—तदेतदिति। 'यदसाधारणं कारणम्' इत्यत्र व्यापारवत्त्वे सतीति पूरणीयम्। अन्यथा कपालतन्तुसंयोगादिरूपव्यापारेऽतिव्याप्तिः। नन्वेवमपि स्वसंयोगात्मकव्यापारद्वारा घटपटाद्यसाधारणकारणानां कपालतन्त्वादीनां घटपटादिनिरूपितकरणत्वापत्तिः इति चेत, इष्टापत्तेः। तथा च व्यापारजनकत्वतदजनकत्वाभ्यां करणकारणयोर्भेदोऽवगन्तव्यः। असाधारणकारणत्वं तु उभयत्र समानमेव। कारणत्रयं भावकार्यं प्रत्येव। अभावेषु ध्वंसस्य निमित्तमात्रं भवति।

**तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम्।**

यथार्थानुभवविभागवाक्यं प्रत्यक्षपदघटितम्। पुनस्तत्करणविभागेऽपि प्रत्यक्षपदनिवेशः कथमित्याशंकायां तत्र प्रत्यक्षपदस्य प्रत्यक्षज्ञानमित्यर्थः, अत्र तु तत्पदस्य तत्करणमित्यर्थः इति विवेचयन् प्रत्यक्षप्रमाणं लक्षयति—प्रत्यक्षज्ञानकरणमिति। आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, इति क्रमेण प्रत्यक्षव्यापारजनकत्वे सति प्रत्यक्षज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वं प्रत्यक्षप्रमाणस्य लक्षणम्। प्रत्यक्षज्ञानत्वावच्छिन्ना या कार्यता, अयं घटः इत्यादिप्रत्यक्षज्ञानेषु वर्तमाना कार्यता। तन्निरूपिता या कारणता, चक्षुरादिप्रत्यक्षप्रमाणनिष्ठा कारणता। तदाश्रयत्वं चक्षुर्घटसंयोगादिव्यापारजनकत्वं च चक्षुरादौ वर्तत इति समन्वयः। व्यापारजनकत्वमात्रोक्तौ ईश्वरकालादृष्टादौ, असाधारणकारणत्वमात्रोक्तौ व्यापारे चातिव्याप्तिः। नन्वेवमपि विषयेन्द्रियसंयोगात्मकव्यापारस्य रसरसत्वादिप्रत्यक्षाजनकतया समवायादीनां जन्यत्व-

घटितव्यापारत्वासंभवेन च व्यापारजनकत्वासंभवात् रसनेन्द्रियादावव्याप्तिरिति चेत्, न; सर्वत्र विषयेन्द्रियसंयोगस्य व्यापारत्वासंभवेऽपि इन्द्रियमनःसंयोगरूपव्यापारस्य सर्वत्रापि संभवेन अव्याप्त्यभावात्। न चैवं मनस्यतिव्याप्तिरिति वाच्यम्। आत्ममनःसंयोगरूपव्यापारमादाय तस्यापि लक्ष्यतया लक्षणसमन्वयस्यापेक्षितत्वात् इति विवेकः। ननु प्रमातृप्रमेयादीन्यपि प्रमाकरणानि इति वक्तुं शक्यत इति चेत्, सत्यम्। सत्यपि प्रमातरि प्रमेये च प्रमानुत्पत्तेः, इन्द्रियसंयोगादौ सति अविलंबेन प्रमोत्पत्तेः इन्द्रियतत्संयोगयोरेव प्रमाकरणत्वव्यवहारः। प्रमां प्रति साधकत्वाविशेषेऽपि अनेनैवोत्कर्षेण तयोः प्रमात्रादिभ्योऽतिशयितत्वम्। अतिशयितं साधकं साधकतमम्। तदेव करणम्। अतः इन्द्रियतत्संयोगादिष्वेव प्रमाकरणत्वमुपपद्यते, न प्रमात्रादिषु इति ज्ञेयम्॥

**इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्।**

प्रत्यक्षज्ञानकरणमित्यत्र प्रत्यक्षज्ञानं किमिति जिज्ञासायामाह—इन्द्रियार्थेति। इन्द्रियार्थसन्निकर्षजन्यत्वे सति ज्ञानत्वं प्रत्यक्षज्ञानस्य लक्षणम्। अत्र ज्ञानत्वानुपादाने इन्द्रियार्थसन्निकर्षध्वंसे, इन्द्रियार्थसन्निकर्षजन्यत्वानुपादाने अनुमित्यादौ चातिप्रसंगः। अत उभयोपादानम्। नचैवमपि आत्ममनःसंयोगस्य ज्ञानमात्रकारणतया इन्द्रियं मनः, अर्थः आत्मा, तत्सन्निकर्षजन्यत्वज्ञानत्वयोः अनुमित्यादौ सत्त्वात् अतिव्याप्तिरिति वाच्यम्। अत्र अर्थपदेन प्रकृतज्ञानविषयस्य विवक्षणात्। आत्मनः प्रकृतघटपटादिज्ञानविषयत्वाभावान्नातिव्याप्तिः। नन्वेवमपि जीवात्मा परमात्मभिन्नः इत्यात्मविषयकानुमितौ अतिव्याप्तिः, अत्रात्मनः प्रकृतज्ञानविषयत्वादिति चेत्, न; इन्द्रियार्थसन्निकर्षत्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकीभूतज्ञानत्वभिन्नजातिमत्त्वस्य लक्षणत्वाङ्गीकारात्। इन्द्रियार्थसन्निकर्षपदेन ज्ञानमात्रकारणीभूतात्ममनःसंयोगस्य ग्रहणेऽपि तज्जन्यतावच्छेदकीभूतज्ञानत्वजातिः न ज्ञानत्वभिन्ना, नापि इन्द्रियार्थसन्निकर्षजन्यतावच्छेदिका। अतो न तत्रातिव्याप्तिः। प्रकृते तद्भिन्नप्रत्यक्षत्वादिजातिमादाय समन्वयश्च। एतेन जातिघटितलक्षणेन यथाश्रुतलक्षणे



ज्ञायमानलिंगस्यानुमितिकरणतावादिमते इन्द्रियार्थसन्निकर्षजन्यानुमितौ अतिव्याप्तिशंका, ईश्वरप्रत्यक्षस्य नित्यतया जन्यत्वाभावात्तत्राव्याप्तिशंका च निरस्ते। आद्ये अनुमितित्वजातौ इन्द्रियार्थसन्निकर्षनिष्ठजनकतानिरूपितजन्यतावच्छेदकत्वविरहात्, ईश्वरप्रत्यक्षे च तादृशजातिमत्त्वस्य सत्त्वादिति ज्ञेयम्॥[1]

**तद् द्विविधं निर्विकल्पकं सविकल्पकं चेति। तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकम्। सप्रकारकं ज्ञानं सविकल्पकम्। यथा डित्थोऽयम्, ब्राह्मणोऽयम्, श्यामोऽयम्, पाचकोऽयमिति।**

प्रत्यक्षं विभजते—तद्द्विविधमिति। तत्र निर्विकल्पकं लक्षयति—निष्प्रकारकमिति। प्रकारत्वानिरूपकत्वे सति ज्ञानत्वं निर्विकल्पकलक्षणम्। ज्ञानत्वमात्रोक्तौ सविकल्पके, प्रकारत्वानिरूपकत्वमात्रोक्तौ घटादौ चातिव्याप्तिः। प्रथमं विषयेन्द्रियसन्निकर्षः। तदनु निर्विकल्पकम्। तदनु सविकल्पकमिति क्रमः। निर्विकल्पकज्ञाने प्रमाणं तु विशिष्टज्ञानं विशेषणज्ञानजन्यम्, विशिष्टज्ञानत्वात्, दण्डीतिविशिष्टज्ञानवत् इत्यनुमानम्। विशिष्टज्ञानविशेषणज्ञानयोः कार्यकारणभावे अनुकूलतर्कस्य सत्त्वान्नाप्रयोजकशंकापि॥

---

१ ईश्वरप्रत्यक्षे च तादृशजातिमत्त्वस्य सत्त्वादिति। अत्रेदमवधेयम्—एतादृशपरिष्कारे प्रत्यक्षत्वजातेः जन्येश्वरप्रत्यक्षसाधारणतया नेन्द्रियार्थसन्निकर्षजन्यतावच्छेदकत्वसंभव इत्यसंभवापत्त्या "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यम्" इत्यादिगौतमसूत्रानुरोधेन लक्षणकर्तुरन्नंभट्टस्य मते ईश्वरप्रत्यक्षमलक्ष्यमेव इति मन्तव्यम्। यदि तस्यापि लक्ष्यत्वे आग्रहः, तदा ज्ञानाकरणकज्ञानत्वमेव प्रत्यक्षलक्षणं बोध्यम्। न चैवमपि निदिध्यासनद्वारा श्रवणमननकरणके योगिप्रत्यक्षेऽव्याप्तिरिति वाच्यम्। ज्ञानाकरणकत्वपदेन ज्ञानत्वघटितधर्मावच्छिन्नकरणकत्वाभावस्यैव विवक्षितत्वात्। योगिप्रत्यक्षं प्रति श्रवणमननयोः निदिध्यासनद्वारा करणत्वेऽपि श्रवणत्वमननत्वरूपेणैव तथात्वम्, न तु ज्ञानत्वघटितधर्मत्वेन, "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति विधायकश्रुतेः। एवंच नाव्याप्तिः। एतेन ज्ञायमानलिङ्गस्यानुमितिकरणत्ववादिमतेपि नानुमितावतिव्याप्तिः। तादृशकरणतावच्छेदकस्य ज्ञानत्वघटितत्वात् इति।

[illegible] अत्रेदं तत्त्वम्। अयं घटः, अयं पटः, इत्यादिज्ञानम् अनुभवसिद्धम्। तत्र इदमर्थघटादिकं विशेष्यम्। समवायादिः संसर्गः। घटत्वादिकं प्रकारः। ज्ञानस्यैतादृशस्य विशेषणविशेष्यसंसर्गादिविषयकत्वात् विशिष्टज्ञानमिति संज्ञा। विशिष्टज्ञाने च विशेषणज्ञानं कारणम्। न हि दण्डमजानानस्य दण्डी पुरुष इति ज्ञानं भवति। तदत्र प्रथमम् एकं ज्ञानं भवतीति वक्तव्यम्। अत्र घटत्वादीनां भानेऽपि प्रकारतादिरूपेण न भानम्। तच्च न विशिष्टज्ञानं, तत्पूर्वं कस्यचिद्विशेषणज्ञानस्याभावात्। निर्विषयज्ञानाभावात् अत्र प्रकारतादिभिन्ना तुरीयविषयता अङ्गीक्रियते। अत्र निर्विकल्पकानङ्गीकारे जनिष्यमाणसविकल्पकप्रत्यक्षानुपपत्तिः, कारणीभूतविशेषणज्ञानाभावात्। निर्विकल्पकस्य विशिष्टबुद्धित्वाभावेनैव नास्य ज्ञानान्तरापेक्षेति नानवस्थापि। सन्निकर्षजन्यतयाऽस्य प्रत्यक्षज्ञानत्वमुपपन्नम्।

सविकल्पकं लक्षयति—सप्रकारकमिति। प्रकारतानिरूपकत्वे सति ज्ञानत्वं सविकल्पकस्य लक्षणम्। विशेष्यानुपादाने इच्छाकृतिसंस्कारद्वेषेषु, विशेषणानुपादाने निर्विकल्पके चातिव्याप्तिः। अनुमित्यादावपि प्रकारतानिरूपकत्वज्ञानत्वयोः सत्त्वात् तत्रातिव्याप्तिवारणाय इन्द्रियार्थसन्निकर्षजन्यत्वं विशेषणीयम्। एवं च इच्छादावतिव्याप्तिवारकज्ञानत्वदलं व्यर्थम्। अतः इन्द्रियार्थसन्निकर्षजन्यत्वमपहाय ज्ञानाजन्यत्वं विशेषणीयम्। न चैवं मूले कुठारः, सविकल्पकस्य निर्विकल्पकजन्यतया अव्याप्तिः[१] इति वाच्यम्। ज्ञानाजन्यत्वस्य ज्ञानाकरणकत्वार्थकत्वात्। निर्विकल्पकं च सविकल्पके न करणम्। किन्तु विशेषणज्ञानविधया कारणम्। अनुमित्यादीनां ज्ञानकरणकत्वाद्व्यावृत्तिः। एवं च ईश्वरप्रत्यक्षेऽपि नाव्याप्तिः। ईश्वरज्ञानस्याजन्यतया पूर्वोक्तलक्षणस्य तत्र संगमनात्। नन्वेवं स्मृतावतिव्याप्तिः। अनुभवस्य संस्कारं प्रत्येव कारणत्वमिति मते स्मृतेः संस्कारमात्रजन्यत्वात् ज्ञानाकरणकत्वघटितलक्षणस्य तत्र सत्त्वादिति चेत्, तदा ज्ञानाकरणकत्वं विहाय प्रत्यक्षत्वजातिमत्त्वं विवक्षणीयम्। अस्मिन् लक्षणे ज्ञानत्वदलं तात्पर्यग्राहकमेव। इच्छादीनां प्रत्यक्षत्वदलेनैव वारणसंभवात्। तथा च प्रकारतानिरूपकत्वे सति प्रत्यक्षत्वजातिमत्त्वमिति फलितम्। एवं विशेष्यतानिरूपकज्ञानत्वं संसर्गतानिरूपकज्ञानत्वं च पृथक् लक्षणं भवितुमर्हतीति ज्ञेयम्। नामजातिगुणक्रियावाचकपदैः सविकल्पकमभिनीय दर्शयति—डित्थोऽयमित्यादिना। डित्थत्वादिप्रकारकम् इदन्त्वावच्छिन्नविशेष्यकं ज्ञानं सविकल्पकमित्यर्थः॥

१ अव्याप्तिरिति। ईश्वरप्रत्यक्षस्य अजन्यत्वेन तत्र लक्षणसमन्वयसंभवात् नासंभवः इति भावः।



प्रत्यक्षज्ञानहेतुः इन्द्रियार्थसन्निकर्षः षड्विधः। संयोगः, संयुक्त समवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति। चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः। घटरूपप्रत्यक्षे संयुक्तसमवायः सन्निकर्षः, चक्षुःसंयुक्ते घटे रूपस्य समवायात्। रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः। चक्षुःसंयुक्ते रूपं समवेतम्, तत्र रूपत्वस्य समवायात्। श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः। कर्णविवरवृत्त्याकाशस्य श्रोत्रत्वात्, शब्दस्याकाशगुणत्वात् गुणगुणिनोः समवायात्। शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः। श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात्। अभावप्रत्यक्षे विशेषणविशेष्यभावः सन्निकर्षः। भूतलं घटाभाववत् इत्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात्। एवं सन्निकर्षषट्कजन्यं ज्ञानं प्रत्यक्षम्। तत्करणमिन्द्रियम्। तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम्।

इति सर्वतन्त्रस्वतन्त्रश्रीमदन्नंभट्टविरचिते तर्कसंग्रहे प्रत्यक्षपरिच्छेदः समाप्तः। शिवम्॥

इन्द्रियार्थसन्निकर्षं विभजते—इन्द्रियार्थेति । प्रत्यक्षेत्यादि तु संगतिप्रदर्शनाय । प्रत्यक्षविषयपदार्थे नियमेन सन्निकर्षस्यावश्यकतया तन्निरूपणस्यावश्यकत्वे प्राप्ते सन्निकर्षं निर्दिशति—संयोग इत्यादिना । प्रत्यक्षज्ञानघटकीभूतं इन्द्रियार्थसन्निकर्षं द्रव्यादिप्रत्यक्षे योजयति—चक्षुषेति । चक्षुषेति तृतीयायाः जननान्वयि प्रयोज्यत्वमर्थः । तत्र चक्षुषः निरूपितत्वेनान्वयः । घटपदं द्रव्यसामान्योपलक्षणम् । जनने इति सप्तम्याः प्रयोजकत्वमर्थः । तथाच चक्षुर्निरूपितप्रयोज्यत्वाश्रयद्रव्यप्रत्यक्षोत्पत्तिप्रयोजकत्वाश्रयः सन्निकर्षः संयोगः इत्यर्थः । इन्द्रियसंयोगः, इन्द्रियसंयुक्तसमवायः, इन्द्रियसंयुक्तसमवेतसमवायः इति रीत्या सन्निकर्षाणां पूर्वम् इन्द्रियपदं योज्यम् । द्रव्यवृत्तिगुणादिप्रत्यक्षे सन्निकर्षमाह—संयुक्तेति । इन्द्रियसंयुक्तं घटादिद्रव्यम् । तत्समवायः गुणादिषु । गुणादिवृत्तिजातिप्रत्यक्षे सन्निकर्षमाह—रूपत्वेति । इन्द्रियसंयुक्तं द्रव्यम् । तत्समवेतं गुणादि । तत्समवायः रूपत्वादिजातौ । शब्दसाक्षात्कारे सन्निकर्षमुदाहरति—श्रोत्रेणेति । श्रोत्रस्याकाशरूपत्वेन शब्दाकाशयोः समवायात् । शब्दत्वसाक्षात्कारे सन्निकर्षमाह—शब्दत्वेति । अत्र इन्द्रियं श्रोत्रम् । तत्समवेतः शब्दः । तत्समवायः शब्दत्वे । विशेषणविशेष्यभावं दर्शयति—अभावप्रत्यक्ष इति । विशेषणविशेष्यभावो नाम विशेषणविशेष्यतासन्निकर्षः । भूतलं घटाभाववदित्यत्र घटाभावस्य विशेषणत्वेन संयुक्तविशेषणता सन्निकर्षः । भूतले घटाभावः इत्यादौ अधिकरणवाचकसप्तम्यन्तपदसमभिव्याहारस्थले आधेयस्य विशेष्यत्वात् संयुक्तविशेष्यता संनिकर्षः । एवम् इन्द्रियसंयुक्तसमवेतपदम्, इन्द्रियसंयुक्तसमवेतसमवेतपदम्, समवेतपदम्, समवेतसमवेतपदं च स्थलभेदेन संयोज्य तत्तदभावस्थले निर्वाह्यम् । तथाच शुक्लरूपं कृष्णत्वाभाववत् इत्यत्र संयुक्तसमवेतविशेषणता । चक्षुःसंयुक्ते घटे शुक्लरूपं समवेतम् । तत्र कृष्णत्वाभावस्य विशेषणत्वात् । शुक्लत्वे कृष्णत्वाभावप्रत्यक्षे संयुक्तसमवेतसमवेतविशेषणता । चक्षुःसंयुक्तद्रव्यसमवेतशुक्ले शुक्लत्वं समवेतम् । तत्र कृष्णत्वाभावस्य विशेषणत्वात् । शब्दाभावप्रत्यक्षे विशेषणता । ककारे खत्वाभावप्रत्यक्षे समवेतविशेषणता । कर्णशष्कुल्यवच्छिन्नाकाशरूपश्रोत्रसमवेते ककारे खत्वाभावस्य विशेषणत्वात् ।



कत्वे खत्वाभावप्रत्यक्षे समवेतसमवेतविशेषणता । एवं घटाभावे पटाभावप्रत्यक्षे संयुक्तविशेषणविशेषणता । चक्षुःसंयुक्तभूतले विशेषणभूतघटाभावे पटाभावस्य विशेषणत्वात् । कत्वाभावे खत्वाभावप्रत्यक्षे समवेतविशेषणविशेषणता सन्निकर्षः । एवमन्यदप्यूह्यम्[1] ।

वैशेषिकमते समवायस्य प्रत्यक्षत्वं नास्तीति अत्र नोक्तम् । प्रत्यक्षत्ववादिमते तु तत्रापि विशेषणविशेष्यभाव इति मन्तव्यम् । सामान्यलक्षणज्ञानलक्षणयोगजधर्माणां विशेषणतान्तर्भावं मण्यालोकादिसंमतमभिप्रेत्य सन्निकर्षषट्कस्यात्राभिधानम् । मतान्तरे तु तेषाम् अलौकिकसन्निकर्षत्वेन विभागः । तस्मादिति । सिद्धमिति । इन्द्रियं प्रत्यक्षप्रमाकरणम् इति सिद्धान्तः इत्यर्थः । अत्र केशवमिश्रास्तु निर्विकल्पकं प्रति इन्द्रियं करणम्, इन्द्रियार्थसन्निकर्षो व्यापारः, निर्विकल्पकं फलम्, निर्विकल्पकानन्तरं जायमानसविकल्पकं प्रति इन्द्रियार्थसन्निकर्षः करणम्, निर्विकल्पकज्ञानं व्यापारः, सविकल्पकं फलम्, सविकल्पकानन्तरं जायमानहानोपादानोपेक्षाबुद्धीनां निर्विकल्पकं करणम्, सविकल्पकमवान्तरव्यापारः, हानादिबुद्धयः फलम् इति त्रिविधकरणत्वमंगीकुर्वन्ति । तेषामिमे कारिके—

> " अक्षजा प्रमितिर्द्वेधा सविकल्पाविकल्पिका ।
> करणं त्रिविधं तस्यास्सन्निकर्षस्तु षड्विधः ॥
> घटतन्नीलनीलत्वशब्दशब्दत्वजातयः ।
> अभावसमवायौ च ग्राह्याः संबन्धषट्कतः ॥" इति

क्वचित् तत्तत्परिच्छेदावसाने "व्याख्यातं प्रत्यक्षम्, व्याख्यातमनुमानम्" इत्यादि दृश्यते । तस्य वाक्यस्य लक्षणस्वरूप-

---

१ वस्तुतस्तु अभावाधिकरणकाभावस्य अधिकरणात्मकतया समवेतविशेषणविशेषणता इत्यादिसंबन्धे मानाभावः । समवायगताभावप्रत्यक्ष एव विशेषणविशेषणता संभवति ।

प्रामाण्यादिकथनेन प्रत्यक्षादिकं विशदीकृतमित्यर्थः। विशेषस्तु पितृचरणविरचितदीपिकाप्रकाशे इति सर्वं शिवम्॥

इति श्रीगर्भपुरीनिवासिनः सर्वदर्शनप्रवीणव्याकरणगणितादितत्त्वज्ञपरमधार्मिकश्रीसुब्रह्मण्यशास्त्रिवर्याणाम् आत्मजस्य श्रीरामशर्मणः कृतौ तर्कसंग्रहव्याख्यायां शक्तिसंजीविन्याख्यायां प्रत्यक्षपरिच्छेदः॥

यस्य सर्वमिदं जातं जायमानं च भावि च।
प्रत्यक्षं सर्वदा नौमि तं कुमारगुरुं विभुम्॥

इति प्रत्यक्षपरिच्छेदः

---

## अथानुमानपरिच्छेदः

**अनुमितिकरणम् अनुमानम्।**

स्कन्दकल्पद्रुमं याचे वल्लीमल्लीमनोहरम्।
देवसेनाश्रयतलं शास्त्रज्ञानमहाफलम्॥

प्रत्यक्षज्ञानं प्रति इन्द्रियं करणम्। इन्द्रियार्थसन्निकर्षो व्यापारः। चाक्षुषादिप्रत्यक्षं फलम्। अनुमितिं प्रति पक्षधर्मताज्ञानानन्तरं जायमानं व्याप्तिज्ञानं करणम्। परामर्शो व्यापारः। अनुमितिः फलम्। "तस्माल्लिङ्गपरामर्शोऽनुमानम्" इति मूलकृदुक्तिस्तु फलोपधायकं करणमिति मतमङ्गीकृत्य। उभयथा पक्षधर्मताज्ञानं परामर्शश्च प्रत्यक्षज्ञानमेव। तज्जन्यत्वम् अनुमिताविति प्रत्यक्षनिरूपणानन्तरम् अनुमितिः निरूप्यते। यद्वा चार्वाकव्यतिरिक्तसर्वदार्शनिकैः अनुमान[illegible]प्रमाणत्वेनांगीकृततया सर्वांगीकृतप्रत्यक्षनिरूपणानन्तरम् [illegible]निरूप्यते। अथवा व्याप्तिज्ञानपरामर्शरूपानुमितिकरणं प्र[illegible]क्षकरणस्येन्द्रियस्य जनकतया, पूर्वं 'प्रत्यक्षानुमाने' इति



करणविभागक्रममनुसृत्य च प्रत्यक्षानन्तरम् अनुमानं निरूपयति—अनुमितीत्यादिना। अनुमितेः करणमिति षष्ठीतत्पुरुषः, संबन्धसामान्ये षष्ठीवचनात् अनुमितिकरणयोः निरूप्यनिरूपकभावः संबन्धः। एवं च करणनिरूपकत्वमनुमितौ, अनुमितिनिरूपितत्वं च करण इति। अतः अनुमितेरिति षष्ठ्याः निरूपितत्वमर्थः। तस्य करणपदार्थैकदेशे करणत्वे अन्वयात् अनुमितिनिरूपितकरणतावदभिन्नमनुमानमिति बोधः। तथाच अनुमानलक्षणम् अनुमितिकरणत्वम्। अनुमितिकरणत्वं च अनुमित्यसाधारणकारणत्वम्। अनुमितित्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वे सति अनुमितिजनकव्यापारजनकत्वम् अनुमितिकरणत्वमिति फलितम्[1]। अनुमितित्वावच्छिन्ना कार्यता, पर्वतो वह्निमानित्यनुमितौ वर्तमाना कार्यता, तन्निरूपिता या कारणता, तदाश्रयत्वस्य, परामर्शरूपव्यापारजनकत्वस्य चानुमाने व्याप्तिज्ञाने सत्त्वाल्लक्षणसमन्वयः। व्यापारजनकत्वमात्रोक्तौ ईश्वरादृष्टकालादावतिव्याप्तिः। तेषां कार्यमात्रं प्रति जनकतया व्यापारजनकत्वसंभवात्। अनुमितित्वावच्छिन्नत्वानिवेशे अनुमितिनिष्ठकार्यतानिरूपितकारणताश्रयत्वे सति व्यापारजनकत्वस्य ईश्वरादौ सत्त्वात्पुनरप्यतिव्याप्तिः। अतः अनुमितित्वावच्छिन्नेति। तन्निवेशे तु ईश्वरादीनां कार्यमात्रं प्रत्येव कारणतया अनुमितित्वमात्रावच्छिन्ननिरूपितकारणताया अभावान्नातिव्याप्तिः। अनुमितित्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वमात्रोक्तौ परामर्शस्य अनुमानत्वानंगीकर्तृमते परामर्शात्मकव्यापारे अतिव्याप्तिः। अनुमितिजनकव्यापारजनकत्वनिवेशे स्वस्य स्वजनकत्वाभावान्न तत्रातिव्याप्तिः। ननु व्यापारत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वविवक्षयैव कालेश्वरादावतिव्याप्तिवारणात् किमर्थ-

---

१ एतादृश व्यापारघटितानुमानलक्षणं न मूलकृदभिमतम्। अत एव अग्रे "स्वार्थानुमिति—परार्थानुमित्योः लिङ्गपरामर्श एव करणम् इति" संग्रहव्याख्यानावसरे "व्यापारवत्कारणं करणमिति मते परामर्शद्वारा व्याप्तिज्ञानं करणम्। तज्जन्यत्वे सति तज्जन्यजनको व्यापारः" इति दीपिकापि संगच्छते।

अनुमित्यसाधारणकारणत्वमिति चेत्, न; कुत्रापि व्यापारत्वेन व्याप्तिज्ञानत्वेन कार्यकारणभावाभावादसंभवापत्तेः। नच विशिष्य परामर्शत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वनिवेशे पूर्वोक्तासंभवस्य, कालादावतिव्याप्तेश्चाभावात् अनुमितित्वावच्छिन्ननिवेशनमफलमेवेति वाच्यम्। परामर्शं प्रति न केवलं व्याप्तिज्ञानं कारणम्, किन्तु पक्षधर्मताज्ञानमपि। एवमुभयोरपि परामर्शहेतुत्वेन परामर्शत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वस्य पक्षधर्मताज्ञाने सत्त्वात्तत्रातिव्याप्तेः। अनुमितित्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वनिवेशे तु पक्षधर्मताज्ञानस्य परामर्शं प्रत्येव हेतुतया[1] अनुमित्यसाधारणकारणत्वस्य तत्राभावान्नातिव्याप्तिः। व्याप्तिज्ञानस्य तु अनुमितिकरणत्वप्रतीत्या अनुमितित्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वस्यापि सत्त्वात्समन्वयः। न च सिद्धिसमानकालिके सिषाधयिषाविरहविशिष्टे व्याप्तिज्ञाने अनुमितिकरणत्वाभावात् तत्राव्याप्तिरिति वाच्यम्। अनुमितिजनकज्ञानवृत्तिधर्मवत्त्वस्य विवक्षणात्। नन्वेवमपि अनुमितिजनकज्ञानवृत्तिप्रमेयत्वादिधर्मवत्त्वस्य व्यापारजनकत्वस्य च कालेश्वरादौ सत्त्वात्पुनरप्यतिव्याप्तिरिति चेत्, न; अनुमितित्वावच्छिन्नजनकतावच्छेदकः व्यापारजनकतावच्छेदकश्च यो धर्मः तद्वत्त्वस्य विवक्षितत्वात्। सिद्धिसमानकालिकव्याप्तिज्ञाने तादृशधर्मस्य व्याप्तिज्ञानत्वस्य सत्त्वात्समन्वयः। कालेश्वरादौ तस्याभावान्नातिव्याप्तिः। वस्तुतस्तु पक्षतासहकृतव्याप्तिज्ञानस्यैव अनुमानत्वांगीकारात् सिद्धिसमानकालिकस्यानुमित्यनुपधायकत्वेऽपि न क्षतिः, तत्रानुमानत्वस्यैवानंगीकारादिति ध्येयम्। अत्र प्रथमं पर्वतो धूमवानिति पक्षधर्मताज्ञानम्। ततः यत्र धूमस्तत्राग्निरिति व्याप्तिज्ञानम्। उभाभ्याम् आभ्यां ज्ञानाभ्यां वह्निव्याप्यधूमवानिति परामर्शः। ततः पर्वतो वह्निमानिति अनुमितिः इति

---

१ परामर्शं प्रत्येव हेतुतया इति। अत्र विषये "सिषाधयिषया शून्या सिद्धिर्यत्र न तिष्ठति। स पक्षस्तत्रवृत्तित्वज्ञानादनुमितिर्भवेत् ॥" इति भाषापरिच्छेदकारिका अनुसन्धेया।



व्याप्तिस्मृतिपरामर्शानुमितीनाम् उत्पत्तयः। पक्षता च सिषाधयिषाविरहविशिष्टसिद्ध्यभाव इति दीपिकाप्रकाशादौ ॥

## परामर्शजन्यं ज्ञानम् अनुमितिः।

घटकज्ञानस्य घटितज्ञानं प्रति हेतुत्वेन अन्योन्याश्रयभिया अनुमानजन्यत्वाघटितं अनुमानलक्षणघटकानुमितिलक्षणमाह—परामर्शेति। परामर्शजन्यत्वे सति ज्ञानत्वम् अनुमितेर्लक्षणम्। पूर्वोक्तोत्पत्तिक्रमेण परामर्शजन्यत्वं ज्ञानत्वं चानुमितौ वर्तत इति लक्षणसमन्वयः। अत्र विशेष्यानुपादाने प्रत्यक्षादिज्ञानेष्वतिव्याप्तिः। परामर्शजन्यत्वरूपविशेषणनिवेशे प्रत्यक्षादिज्ञानस्य इन्द्रियार्थसन्निकर्षादिजन्यत्वेन परामर्शजन्यत्वाभावात् नातिप्रसंगः। विशेषणमात्रोपादाने ध्वंसं प्रति प्रतियोगिनः कारणत्वेन परामर्शध्वंसेऽतिव्याप्तिः। न च परामर्शनिष्ठजनकतायां समवायसंबन्धावच्छिन्नत्वनिवेशात् परामर्शध्वंसे नातिव्याप्तिः। प्रतियोगितासंबन्धेन जायमानध्वंसं प्रति तादात्म्यसंबन्धेनैव प्रतियोगिनः कारणत्वात्, समवायसंबन्धावच्छिन्नपरामर्शनिष्ठकारणतानिरूपितकार्यत्वस्य परामर्शध्वंसेऽभावात् ज्ञानत्वदलमनर्थकमेवेति वाच्यम्। समानविषयकानुभवस्य समवायसंबन्धेनैव संस्कारं प्रति कारणत्वात् साध्यव्याप्यहेतुमत्पक्षविषयके संस्कारे परामर्शनिष्ठसमवायसंबन्धावच्छिन्नकारणतानिरूपितकार्यत्वस्य सत्त्वात् तत्रातिव्याप्तिवारणाय ज्ञानत्वदलम्। समवायसंबन्धेन जायमानानुमितिं प्रति समवायसंबन्धेन परामर्शस्य कारणत्वात् लक्षणसमन्वयः। उभयत्रापि समवायसंबन्धनिवेशेन प्रत्यक्षं प्रति विषयस्य कारणतामादाय परामर्शजन्यत्वं ज्ञानत्वं च परामर्शप्रत्यक्षे वर्तत इति नातिव्याप्तिशंकापि। प्रत्यक्षं प्रति विषयस्य तादात्म्यसंबन्धेनैव कारणत्वात्, समवायेन कारणत्वाभावात्। नन्वेवमपि वह्निव्याप्यधूमवत्पर्वतवानयं देश इति विशिष्टवैशिष्ट्यावगाहिज्ञानेऽतिव्याप्तिः। तत्रापि वह्निव्याप्यधूमवान् पर्वत इति निश्चयस्य परामर्शरूपस्य तादृशनिश्चयत्वेन कारणतया निरुक्तानुमितिलक्षणस्य सत्त्वात्। विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति विशेषणतावच्छेदकप्रकारकनिर्णयस्य तादृशनिर्णयत्वेन कारणत्वादिति चेत्, न; परामर्शजन्यमित्यनेन जन्यतावच्छेदक-

तया सिद्धानुमितित्वजातिमत्त्वं लक्षणं ग्राह्यम्। तत्सूचनायैव परामर्शजन्यमित्युक्तमिति विभावनीयम्। नन्वनुमितित्वस्य जातित्वे किं मानमिति चेत्; परामर्शनिष्ठजनकतानिरूपितानुमितिनिष्ठजन्यता किंचिद्धर्मावच्छिन्ना, जन्यतात्वात्, घटनिष्ठजन्यतावत्, इति अनुमानेन "सिद्धधर्मस्य च जातित्वे लाघवम्" इति लाघवज्ञानसहकृतेनानुमितित्वजातिसिद्धेः। नन्वनुमितित्वजातेः लक्षणत्वांगीकारे अनुमितिः इतरभिन्ना, अनुमितित्वात्, इत्यनुमाने पक्षतावच्छेदकहेत्वोः ऐक्येन घटो घट इतिवत् उपनयवाक्यात् शाब्दबोधानुपपत्तिः इति चेत्, न; तयोरैक्येऽपि इतरभेदव्याप्यानुमितित्ववदभिन्नानुमितिरित्याकारकस्य उपनयवाक्यजन्यस्य विधेयांशे अधिकावगाहिनः शाब्दबोधस्य नवीनैरंगीकृततया अनुपपत्त्यभावात्। यदि उदाहरणवाक्यादेव व्याप्तिलाभात् उपनयेनापि तत्प्रतिपादने पौनरुक्त्यमिति पक्षे हेतुमत्तामात्रमेवोपनयेन बोधनीयम्। तथा च 'तथा चायम्' इति उपनयवाक्याच्छाब्दबोधानुपपत्तिः तदवस्थैवेति विभाव्यते, तदा परामर्शजन्यतावच्छेदकानुभवत्वव्याप्यजातिमत्त्वं लक्षणं ज्ञेयम्। अनुभवत्वव्याप्यत्वं च अनुभवत्वन्यूनवृत्तित्वम्। यद्यप्यत्र परामर्शजन्यतावच्छेदकजातिमत्त्वमित्येव परिष्कृतमनुमितिलक्षणं वक्तुं शक्यते, तथापि सा जातिरनुभवत्वव्याप्यानुमितित्वरूपैवेति झटिति बोधनायानुभवत्वव्याप्यत्वनिवेशः इति ज्ञेयम्। तदर्थतयैव मूलोक्तलक्षणे ज्ञानपदस्य निवेशः। तेन प्रत्यक्षादौ नातिप्रसंग इति अलं पल्लवितेन ॥

व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः। यथा वह्निव्याप्यधूमवानयं पर्वत इति ज्ञानं परामर्शः। तज्जन्यं पर्वतो वह्निमानिति ज्ञानमनुमितिः।

अनुमितिलक्षणघटकपरामर्शलक्षणमाह—व्याप्तिविशिष्टेति। व्याप्त्या विशिष्टं च तत् पक्षधर्मताज्ञानं चेति कर्मधारयः। व्याप्त्या विशिष्टमित्यत्र तृतीयाया आधेयत्वमर्थः। ज्ञाने व्याप्तिवैशिष्ट्यं च विषयतानिरूपकत्वम्। विषयता चात्र प्रकारता। अतः विशिष्टपदस्य प्रकारतानिरूपकत्वं पर्यवसितार्थः। पक्षधर्मताया ज्ञानमित्यत्र षष्ठ्या विषयतानिरूपकत्वमर्थः। धर्मतापदस्य



संबन्धः अर्थः। तृतीयार्थाधेयतायाः प्रकारतायां षष्ठ्यर्थविषयतानिरूपकत्वस्य ज्ञाने चान्वयः। निपातातिरिक्तनामार्थयोरभेदसंसर्गेणान्वय इति नियमात् व्याप्तिविशिष्टप्रकारतानिरूपकाभिन्नं पक्षसंबन्धविषयकं ज्ञानं परामर्श इति बोधः। एवं च व्याप्तिनिष्ठप्रकारतानिरूपकत्वे सति पक्षसंबन्धविषयकत्वे च सति ज्ञानत्वं परामर्शलक्षणम्। वह्निव्याप्यधूमवान् पर्वत इति ज्ञाने व्याप्तिः धूमे विशेषणम्। अतः व्याप्तिनिष्ठप्रकारतानिरूपकत्वं ज्ञानस्य। यत्र ज्ञानं विशेषणविशेष्यावगाहि, तत्र तयोः संसर्गश्च नियमेन भासते। एवं च अत्र धूमस्य पर्वतांशे विशेषणत्वेन धूमपर्वतयोः संसर्गस्य संयोगस्यापि विषयत्वं स्वीकार्यम्। अतश्च पक्षसंबन्धविषयकत्वं ज्ञानत्वं च परामर्शे वर्तत इति समन्वयः। ज्ञानत्वानुपादाने वह्निव्याप्यधूमवत्पर्वतविषयकसंस्कारादौ अतिव्याप्तिः। अतः ज्ञानत्वोपादानम्। ज्ञानत्वमात्रोक्तौ अनुमित्यादावतिव्याप्तिः। पक्षसंबन्धविषयकत्वे सति ज्ञानत्वमात्रोक्तौ केवलपक्षधर्मताज्ञाने, पक्षसंबन्धविषयकत्वानुपादाने वह्निव्याप्यो धूम इति व्याप्तिस्मृतिरूपानुमितिकरणे च अतिव्याप्तिः। इति लक्षणदलप्रयोजनम्। अत्र केचित्—व्याप्तिविशिष्टस्य पक्षधर्मताज्ञानम्; अथवा व्याप्तिविशिष्टा च सा पक्षधर्मता, तस्याः ज्ञानम् (वैशिष्ट्यं च सामानाधिकरण्यसंबन्धेन); यद्वा व्याप्तिविशिष्टस्य पक्षधर्मता, तस्याः ज्ञानम्; उतवा व्याप्तिविशिष्टे पक्षधर्मताज्ञानम् इत्यादि विग्रहं विकल्प्य व्यभिचारिहेतुकानुमितौ हेतुर्न व्याप्तिविशिष्टः इति तत्राव्याप्तिं शङ्कित्वा ज्ञानान्तकर्मधारयमाश्रित्य "विशिष्टपदस्य विषयत्वार्थकत्वसंभवात्, वस्तुतः व्याप्तिवैशिष्ट्यस्य व्यभिचारिहेतुपक्षधर्मतादौ अभावेऽपि व्याप्तिविषयकत्वं ज्ञाने संभवतीति व्यभिचारिहेतुकपरामर्शेऽपि लक्षणसंगमनाय ज्ञानान्तकर्मधारयः" इति वदन्ति। अत्रेदं तत्त्वम्—ज्ञानान्तकर्मधारये कृतेऽपि धूमवान् वह्नेरित्यादौ व्याप्तेरेवाप्रसिद्धया व्याप्तिविशिष्टत्वं ज्ञाने न संभवतीति अव्याप्तितादवस्थ्यमेव। दीपिकायां "हेतुव्यापकसाध्यसामानाधिकरण्यं व्याप्तिः" इति निर्धारितत्वेन धूमवान् वह्नेरित्यत्र वह्निरूपहेतुव्यापकत्वं धूमस्य न संभवति खलु। अतः ज्ञानान्तकर्मधारयेऽप्यव्याप्तिरेव। तर्हि "व्याप्तिविषयकं यत्पक्षधर्मताज्ञानं स परामर्श इत्यर्थः"

इति दीपिकाविरोध इति चेत्, सत्यम्। तत्र ज्ञानान्तकर्मधारय-
प्रदर्शनस्यायमभिप्रायः–सर्वत्र वस्तुगत्या व्याप्तिमान् यः, तस्य
पक्षधर्मताज्ञानमिति न मन्तव्यम्, किंतु व्याप्तिविषयकमपि ज्ञानं
परामर्शो भवतीति। विशिष्टपदस्वारस्यप्रदर्शनाय च दीपिकायां
तथा व्याख्यातम्। तर्हि लक्षणस्याव्याप्तिपरिहारः कथमिति
चेत्, अत्र पूर्वं 'प्रत्यक्षानुमिति' इति यथार्थानुभवस्यैव विभक्ततया
तत्करणमपीह यथार्थानुमितिकरणमेव वक्तव्यम्। तथा च तादृशपरामर्शः
नासद्धेतुविषयको भवतीति व्यभिचार्यादीनामलक्ष्यतया व्याप्तिविशिष्टस्ये-
त्यादिविग्रहे कृतेऽपि अव्याप्तिप्रसंगस्य नावकाश इति[1]। नन्वेवं
ज्ञानान्तकर्मधारयस्वीकारे 'वह्निव्याप्यो धूमः, घटवान् पर्वतः' इति
ज्ञाने व्याप्तिप्रकारकपक्षधर्मताविषयकत्वयोः सत्त्वादतिव्याप्तिरिति चेत्,
न; व्याप्तिनिष्ठप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्ष-
तावच्छेदकावच्छिन्नविशेष्यताशालिनिर्णयत्वस्य विवक्षणीयत्वात्। एवं च
'वह्निव्याप्यो धूमः, घटवान् पर्वतः' इत्यादिज्ञाने हेतुनिष्ठप्रकारता-
निरूपितत्वं घटवत्पर्वतविषयतायां नास्तीति नातिव्याप्तिः।
इत्थं परिष्कारः अन्तरा भासमानैकपदार्थनिष्ठप्रकारताविशेष्यतयोः अभेदाङ्गी-
कारेण। यद्येवं 'रक्तदण्डवान् पुरुषः' इति ज्ञानस्य रक्तरूपविशेष्यक-
दण्डाभावनिश्चयप्रतिबध्यत्वापत्तिः, दण्डप्रकारतानिरूपितरक्तरूपनिष्ठविशे-
ष्यताशालित्वात् तादृशज्ञानस्य इत्युच्यते, तदा भट्टाचार्यमतानुसारेण
एकनिष्ठविशेष्यताप्रकारतयोः भेदं तयोः अवच्छेद्यावच्छेदकभावं च स्वीकृत्य
व्याप्तिनिष्ठप्रकारतानिरूपितहेतुनिष्ठविशेष्यतावच्छिन्नप्रकारतानिरूपितपक्षनिष्ठ-
विशेष्यताशालिनिश्चयत्वं परामर्शस्य लक्षणमिति वक्तव्यम्।

इदमत्रावधेयम्—एकज्ञानीययोः समानाधिकरणयोः विशेष्यता-
प्रकारतयोः समनैयत्याद् अभेद इत्येके। एकधर्मिनिष्ठविशेष्यताप्रकारतयोः

---

१ अयथार्थानुभवनिरूपण असद्धेतुननिरूप्य. यथार्थानुभवनिरूपणावसरे तन्नि-
रूपणात् असद्धेतुकपरामर्शस्यापि लक्ष्यत्वमेवेति विभाव्यते यदि, तर्हि विषयता-
घटितत्वेन व्याप्तिं परिष्कृत्य अव्याप्तिर्वारयितव्येति ज्ञेयम्॥



समनैयत्यात् अवच्छेद्यावच्छेदकभावः इत्यपरे। अत्र आद्यमते 'रक्तदण्डवान्
पुरुषः' इति ज्ञाने दण्डः रक्तापेक्षया विशेष्यम्, पुरुषापेक्षया विशेषणम्,
तथा रक्तरूपं रक्तत्वापेक्षया विशेष्यम्, दण्डापेक्षया विशेषणं च भवति। अत्र
दण्डनिष्ठा रक्तनिरूपिता विशेष्यता पुरुषनिरूपितप्रकारता चैकैव। एवं
रक्तनिष्ठा रक्तत्वनिरूपिता विशेष्यता दण्डनिरूपिता प्रकारता चैकैव।
अतः रक्तत्वनिष्ठप्रकारतानिरूपितरक्तनिष्ठप्रकारतानिरूपितदण्डनिष्ठप्रकारता-
निरूपितपुरुषनिष्ठविशेष्यताशालिबोधः भवति निरुक्तं 'रक्तदण्डवान् पुरुषः'
इति ज्ञानम्'। अत्र रक्तपदेन रक्तरूपं गृह्यते। एवं च एकनिष्ठप्रकारता-
विशेष्यतयोः अभेदस्वीकारे रक्तरूपविशेष्यकदण्डाभावनिश्चयः 'रक्त-
दण्डवान् पुरुषः' इति ज्ञानं प्रतिबध्नाति। विशेष्यताप्रकारत-
योरैक्यात् रक्तरूपविशेष्यकदण्डप्रकारकज्ञानं प्रति रक्तरूपं दण्डाभाव-
वदिति ज्ञानस्य दण्डनिष्ठप्रकारतानिरूपिताभावनिष्ठप्रकारतानिरूपित-
रक्तरूपनिष्ठविशेष्यताशालितया तदभाववत्ताज्ञानाकारत्वमिति प्रतिबन्ध-
कत्वापत्तिः। एकनिष्ठविशेष्यताप्रकारतयोः भेदाङ्गीकारे तु तयोरवच्छेद्याव-
च्छेदकभावात् रक्तरूपनिष्ठा या रक्तत्वनिरूपितविशेष्यत्वावच्छिन्ना प्रकारता
तन्निरूपिता दण्डनिष्ठा या विशेष्यता तदवच्छिन्ना प्रकारतेति जाते रक्तरूपं
दण्डाभाववदिति ज्ञानस्य तदभाववत्ताज्ञानाकारता न भवति, रक्तनिष्ठविशे-
ष्यतावच्छिन्नप्रकारत्वाभावात् इति विशेष्यताप्रकारतयोः भेदवादिनः।
अत्र मते रक्तदण्डवान् पुरुष इति बोधः रक्तत्वनिष्ठप्रकारतानिरूपितरक्तनिष्ठ-
विशेष्यत्वावच्छिन्नप्रकारतानिरूपितदण्डनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरू-
पितपुरुषनिष्ठविशेष्यताशाली भवति। आद्यमते विशेष्यताप्रकारतयोः
अभेदाङ्गीकारेण मध्यपतितस्य प्रकारतारूपतैव, न तु विशेष्यतारूपता।
अतः तन्मते रक्तत्वनिष्ठप्रकारतानिरूपितरक्तनिष्ठप्रकारतानिरूपितदण्डनिष्ठ-
प्रकारतानिरूपितपुरुषनिष्ठविशेष्यताशाली बोधः। परामर्शमभिनीय दर्शयति–
यथेत्यादिना। अनुमितिमभिनीय दर्शयति–तज्जन्यमित्यादिना।

**यत्र यत्र धूमः तत्र वह्निरिति साहचर्यनियमो व्याप्तिः।**

परामर्शघटकव्याप्तिलक्षणमाह—यत्र यत्रेति। यद्धर्मावच्छिन्नवाचक-

पदसमभिव्याहारदशायां यावत्पदं श्रूयते तद्धर्मावच्छिन्नव्यापकत्वं विधेयांशे भासत इति नियमेन धूमपदसमभिव्याहृतयत्पदेन धूमाधिकरणं बोध्यते; वीप्सया च यावत्त्वं द्योत्यते। तथा च धूमाधिकरणे यावति वह्निः इति लभ्यते। अतश्च धूमाधिकरणबोधकेन यावत्पर्यवसायिद्विरुक्तयत्पदेन तत्र-पदेन च विधेयीभूतवह्न्यंशे धूमव्यापकत्वं गृह्यते। वह्न्यंशे धूमव्यापकत्वभाने तुल्यवित्तिवेद्यतया धूमे वह्निव्याप्यत्वं च भासते। वह्निव्याप्यत्वं च वह्न्यभाववदवृत्तित्वे सति वह्निसामानाधिकरण्यम्। तदभाववदवृत्तित्वस्य व्याप्तिघटकत्वे इदं वाच्यं ज्ञेयत्वादित्यादौ केवलान्वयिस्थले स्वरूपसंबन्धावच्छिन्नवाच्यत्वत्वावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या अव्याप्तिरिति तदपहाय हेतुव्यापकसाध्यसामानाधिकरण्यं व्याप्तिरिति गृहीतम्। एवं च धूमव्यापकवह्निसामानाधिकरण्यं वह्निनिरूपिता धूमनिष्ठा व्याप्तिरिति जातम्। साहचर्यं सामानाधिकरण्यम्। नियम इत्यत्र अर्शआद्यच्। साहचर्यस्येति षष्ठ्याः आधेयत्वमर्थः। तथा च साहचर्यनिष्ठनियमवत् इति लभ्यते। घटवृत्तिरूपवान् यथा घट एव, तथा साहचर्यनिष्ठनियमवत् साहचर्यमेवेति नियतसाहचर्यं व्याप्तिरिति पर्यवसितोऽर्थः। यद्वा नियम इत्यत्र नियमः नियमवत्। 'कृदभिहितो भावः द्रव्यवत् प्रकाशते' इति नियमात्। कृता बोध्यमानः भावः धात्वर्थः, द्रव्यवत् स्वाश्रयवत्, सप्तम्यन्तात् वतिप्रत्ययः, स्वाश्रये बोध्यमान इव स्वाश्रयविशेषणतयापि कृद्बोध्यमानो भावः प्रकाशत इति तदर्थः। ततश्च नियतं साहचर्यमित्यायातम्। नियतत्वं व्यापकनिरूपितत्वम्। यत्र यत्र धूमः तत्रेति पदचतुष्टयं धूमव्यापके तात्पर्यग्राहकम्। वह्निपदस्य वह्निसामानाधिकरण्ये लक्षणा। इतिपदार्थश्चाभेदः। तस्य साहचर्ये अन्वयः। एवं च धूमव्यापकवह्निसामानाधिकरण्याभिन्नं यत् नियतसाहचर्यम्, तत् व्यापकनिरूपितसाहचर्यं इति बोधः। यद्वा साहचर्यनियम इत्यत्र नियमपदस्थाने नियतपदयोजनया व्युत्क्रमेण पाठे च नियतसाहचर्यमिति लभ्यते। नियतत्वं च व्यापकत्वम्। साहचर्यं सामानाधिकरण्यम्। तथाच धूमाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगिवह्न्यधिकरणवृत्तित्वं व्याप्तिः। इदं च वह्निमान् धूमात् इति स्थलविशेषलक्षणम्। सामान्यलक्षणं तु हेत्वधिकरणवृत्त्यत्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरिति फलितम्। पर्वतो वह्निमानित्यत्र हेतुर्धूमः। तदधिकरणं महानसः। तद्वृत्तिः यः अत्यन्ताभावः घटाद्यभावः; न तु वह्न्यभावः। तत्प्रतियोगि घटादिकम्। अप्रतियोगि साध्यं वह्न्यात्मकं। तदधिकरणं महानसः। तद्वृत्तित्वं धूमे इति समन्वयः। धूमवान् वह्नेः इत्यत्रासद्धेतौ नातिव्याप्तिः। तत्र हेतुः वह्निः। तदधिकरणं अयोगोलकम्। तद्वृत्तिर्योऽत्यन्ताभावः धूमाभावः। तत्प्रतियोग्येव साध्यं धूमः अप्रतियोगि न भवतीति। न चैवमपि वह्निमान् धूमात् इत्यादौ अव्याप्तिः; हेत्वधिकरणमहानसादिषु वर्तमानानां तत्तद्व्यक्तित्वेन पर्वतीयचत्वरीयादिवह्न्यभावानां चालिनीन्यायेन वर्तमानतया सर्वस्यापि वह्नेः प्रतियोगित्वमेवेति वाच्यम्। हेत्वधिकरणवृत्त्यत्यन्ताभावाप्रतियोगीत्यत्र अप्रतियोगिपदस्य प्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नेति परिष्कारान्न दोषः। एवं च हेत्वधिकरणतत्तद्व्यक्तिवृत्तितत्तद्वह्न्यभावप्रतियोगितावच्छेदकत्वस्य तत्तद्वह्नित्वे संभवेऽपि वह्नित्वसामान्ये तदवच्छेदकत्वाभावादनवच्छेदकं यत्साध्यतावच्छेदकं वह्नित्वं तदवच्छिन्नसामानाधिकरण्यस्य धूमे सत्त्वान्नाव्याप्तिः। अत्र हेत्वधिकरणं हेतुतावच्छेदकसंबन्धेन ग्राह्यम्। नो चेत् समवायेन धूमाधिकरणे धूमावयवे वह्न्यभावस्य सत्त्वात् वह्नित्वस्य प्रतियोगितानवच्छेदकत्वासंभवादव्याप्तिः। हेत्वधिकरणं च हेतुतावच्छेदकावच्छिन्नाधिकरणं ग्राह्यम्। तेन द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ 'विशिष्टं शुद्धान्नातिरिच्यते' इति न्यायेन विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्येन शुद्धसत्ताधिकरणे गुणे द्रव्यत्वाभावसत्त्वेऽपि नाव्याप्तिः। विशिष्टस्य शुद्धाभिन्नत्वेऽपि गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाधिकरणतायाः गुणेऽभावात्। यत्र विशेषणविशेष्योभयाधिकरणत्वम्, तत्रैव विशिष्टाधिकरणत्वमिति नियमादिति तत्त्वम्। हेत्वधिकरणवृत्तित्वं चाभावस्य स्वरूपसंबन्धेन बोध्यम्। तेन संयोगेन धूमाधिकरणे पर्वतादौ कालिकसंबन्धेन वह्न्यभावसत्त्वेऽपि नाव्याप्तिः। तादृशाभावीयप्रतियोगिता च साध्यतावच्छेदकसंबन्धावच्छिन्ना ग्राह्या। तेन वह्निमान् धूमादित्यादौ धूमाधिकरणपर्वतादौ समवायसंबन्धा-

-वच्छिन्नप्रतियोगिताकत्वहृयभावसत्त्वेऽपि नाव्याप्तिः। कपिसंयोगी एत-द्वृक्षत्वादित्यादौ अव्याप्तिवारणाय हेत्वधिकरणवृत्त्यभावस्य निरवच्छिन्नवृत्ति-कत्वं विशेषणं देयम्। कपिसंयोगाभावः वृक्षादौ न निरवच्छिन्नवृत्तिकः। मूले असन्नपि कपिरग्रेऽवतिष्ठते इति प्रतीत्या मूलादेः तदवच्छेदकत्वात्। तत्र निरवच्छिन्नवृत्तिकाभावः घटपटाद्यभाव एव भवति; न तु कपिसंयोगा-भावः। अतः तादृशाभावप्रतियोगितानवच्छेदकत्वं कपिसंयोगत्वस्येति समन्वयः। तार्किकाणां व्याप्तिलक्षणपरिष्कार एव महानुत्साहः, बहुतरप्रया-सश्च। अत्र तु बालानां क्लेशो मा भूदिति दिङ्मात्रं प्रदर्शितम्। येन संबन्धेन हेतोः पक्षवृत्तित्वं तेन संबन्धेन हेतुमत्ताज्ञानात् यत्संबन्धावच्छिन्नप्रतियोगि-तानवच्छेदकत्वं साध्यतावच्छेदके गृह्यते तेन संबन्धेन साध्यस्यानुमितिरिति हृदयम्।

व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता।

पक्षधर्मतां विवृणोति—व्याप्यस्येति। वस्तुतो व्याप्यो यो धूमादिः तन्निष्ठपर्वतादिवृत्तित्वं पक्षधर्मता। पर्वतस्येवान्येषामपि पक्षत्वं भवत्येवेति आदिपदम्। अत्र व्याप्यस्येति षष्ठ्याः आधेयत्वं पर्वतादौ इति सप्तम्याः निरूपितत्वं चार्थः। तथा च व्याप्यनिष्ठपर्वतादिनिरूपितवृत्तित्वं पक्ष-धर्मत्वमित्यर्थः। यत् अनुमीयते तत्साध्यम्। येन साध्यते स हेतुः। यत्र साध्यते स पक्षः। हेतोः पक्षे सत्त्वं पक्षधर्मतेति विवेकः।

अनुमानं द्विविधं स्वार्थं परार्थं चेति। स्वार्थं स्वानुमिति-हेतुः। तथाहि स्वयमेव भूयोदर्शनेन यत्र धूमस्तत्राग्निरिति महान-सादौ धूमे वह्निव्याप्तिं गृहीत्वा पर्वतसमीपं गतः तद्गते चाग्नौ सन्दिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति यत्रधूमस्तत्राग्निरिति। तदनन्तरं वह्निव्याप्यधूमवानयं पर्वतः इति ज्ञानमुत्पद्यते। अयमेव लिंगपरामर्श इत्युच्यते। तस्मात्पर्वतो वह्निमानित्यनुमितिरुत्पद्यते। तदेतत् स्वार्थानुमानम्।

लिङ्गपरामर्शस्यैव अनुमितिकरणत्वव्यवस्थापनात् अनुमितिः कति-विधा? अनुमितिसामान्ये लिंगपरामर्शः कथं करणं भविष्यतीत्यादि-



-शंकां परिजिहीर्षुः अनुमानं विभज्य द्विविधानुमित्योरपि लिंगपरामर्शस्य करणत्वप्रदर्शनार्थमुत्तरग्रन्थमारभते—अनुमानमित्यादिना।

अनुमानं विभजते—द्विविधमिति। अनुमानं, नैयायिकैरनुमान-पदेन व्यवह्रियमाणं, द्विविधं, विभाजकधर्मद्वयवदित्यर्थः। स्वस्यार्थः प्रयोजनं यस्मात् तत् स्वार्थम्। परस्यार्थः प्रयोजनं यस्मात् तत् परार्थम्। प्रयोजनं च प्रकृते अनुमितिरेवेत्याह—स्वार्थं स्वानुमितिहेतुरिति। स्वपदेन यस्मिन् अनुमानं स पुरुषो गृह्यते। अत्र स्वसमवेतानुमितिमात्रहेतु-रिति निष्कृष्टार्थः। तेन परार्थानुमानस्यापि अनुमित्यादिदशायां स्वसमवेतानु-मितिजनकत्वेऽपि न दोषः। स्वार्थं च तदनुमानं चेत्यर्थः। न्यायाप्रयोज्यत्वे सति अनुमानत्वं स्वार्थानुमानलक्षणम्। न्यायः पंचावयववाक्यसमूहः। अनुमानत्वमात्रोक्तौ परार्थानुमाने, न्यायाप्रयोज्यत्वमात्रोक्तौ घटादौ चाति-व्याप्तिरिति उभयोपादानम्। स्वार्थानुमानमेव उपपादयितुमारभते—तथा-हीत्यादिना। अत्र हिशब्दस्य हेतुत्वमर्थः। तच्च तथाहीत्यारभ्य उप-पादकवाक्यं यावत् प्रयुज्यते तावद्वाक्यप्रतिपाद्यार्थनिष्ठम्। थाल्प्रत्ययस्य प्रकारोऽर्थः। तत्र हेतुत्वस्य निरूपकतासंबन्धेनान्वयः। तथा चोपपाद-कयावद्वाक्यप्रतिपाद्यार्थनिष्ठहेतुतानिरूपकप्रकाराश्रयः पूर्वोक्तार्थः इति बोधः[1]। स्वार्थानुमानसामग्रीं दर्शयति—स्वयमेवेत्यादिना। भूयोदर्शनेन= भूयो भूयो दर्शनेन इत्यर्थः। बहुष्वधिकरणेषु व्यभिचारज्ञानविरहसहकृत-सहचारदर्शनेन धूमे वह्निव्याप्तिं गृहीत्वा, पर्वते धूमं पश्यन् व्याप्तिं स्मरतीति भावः।

तदनन्तरं=व्याप्तिस्मरणानन्तरम्। तस्मात्=परामर्शात्। अत्रोप-पादकवाक्येऽयं क्रमः प्रतिपादितः—प्रथमं भूयोदर्शनम्। तदनु महान-साद्यवच्छेदेन हेतौ व्याप्तिग्रहश्चोक्तः। "तद्गते चाग्नौ सन्दिहान" इत्यनेन साध्यसंशयरूपपक्षता, "पर्वते धूमं पश्य" न्नित्यनेन

---

१ अत्र "प्रकारवचने थाल्" इत्यनेन प्रकारवृत्तिभ्यः एव किमादि-शब्देभ्यः स्वार्थे थाल् प्रत्ययस्य विधानात् एतादृशवाक्यार्थवर्णनापेक्षया, तथाही-त्यस्य निखण्डुप्रसिद्धं निदर्शनार्थकत्वमङ्गीकृत्य वाक्यार्थवर्णनमेव युक्ततरम्।

पक्षधर्मताज्ञानं, "व्याप्तिं स्मरती" त्यनेन व्याप्तिस्मृतिः, व्याप्तिस्मृत्युत्तरं परामर्शः तदन्वनुमितिरिति ।

यत्तु स्वयमेव धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पंचावयववाक्यं प्रयुङ्क्ते तत्परार्थानुमानम् । यथा "पर्वतो वह्निमान् । धूमवत्त्वात् । यो यो धूमवान् स वह्निमान्, यथा महानसः । तथा चायम् । तस्मात्तथा" इति । अनेन वाक्येन प्रतिपादिताल्लिंगात्परोऽप्यग्निं प्रतिपद्यते । प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पंचावयवाः । पर्वतो वह्निमानिति प्रतिज्ञा । धूमवत्त्वादिति हेतुः । यो यो धूमवान् स वह्निमान् यथा महानसः इत्युदाहरणम् । तथाचायमित्युपनयः । तस्मात्तथेति निगमनम् । स्वार्थानुमितिपरार्थानुमित्योः लिंगपरामर्श एव करणम् । तस्माल्लिंगपरामर्शोऽनुमानम् ।

स्वस्य ज्ञानानन्तरमेव परप्रतिपत्तिः संपादयितुं शक्यत इति अभिप्रेत्य परार्थानुमानं व्युत्पादयति—यत्त्विति । पंचावयववाक्यमित्यनेनान्वयः । धूमादग्निमनुमायेति । धूमलिंगकाग्निसाध्यकानुमित्यनन्तरमित्यर्थः । पंचावयववाक्यं प्रयुङ्क्ते—पंचावयववाक्यप्रयोक्ता भवति । तत्परार्थानुमानमिति । अत्र व्यापारवत्कारणं करणमिति मतमप्यंगीकुर्वन् एवमाह । अतः तादृशपंचावयववाक्यप्रयोज्यमानसपरामर्शव्यापारकं तादृशमानसव्याप्तिज्ञानं परार्थानुमानमिति तन्मते । स्वमते तु लिंगपरामर्श एवानुमानमिति स्फुटं वक्ष्यतीति न विस्मर्तव्यम् । ननु यत्तु पंचावयववाक्यमित्यत्र यच्छब्दस्य पंचावयववाक्यपरतया परार्थानुमानस्य व्याप्तिज्ञानरूपतया उभयोः भेदात् तत्परार्थानुमानमिति तच्छब्देन परामर्शोऽनुपपन्नः, यत्तच्छब्दार्थयोरैक्यनियमात् । प्रकृते तदभावादिति चेत्, न; परस्यार्थः अनुमितिरूपं प्रयोजनं यस्मात् तत् परार्थम् । परार्थमनुमानं यस्मात्तदिति बहुव्रीहिगर्भबहुव्रीहिसमासेन परार्थानुमानप्रयोजकत्वस्य पंचावयववाक्ये संभवात्, परामर्शे मानसव्याप्तिज्ञाने च तत्प्रयोज्यत्वसंभवाच्च, मतद्वयेऽप्यनुपपत्त्यभावात् । अथवा यदे इत्येतत् लुप्तचतुर्थीकं अव्ययम् । अतः यस्मै यादृशव्याप्तिज्ञानाय लिंगपरा-



मर्शार्थं वा पंचावयववाक्यं प्रयुङ्क्ते तत् व्याप्तिज्ञानं लिंगपरामर्शो वा अनुमानमित्यर्थकत्वोपगमे यत्तच्छब्दयोः एकार्थत्वान्नानुपपत्तिः । अथवा यत्तच्छब्दयोः पञ्चावयववाक्यमेवार्थः । तत्प्रयोज्ये परकीयलिङ्गपरामर्शे तदभेदस्तु आयुर्घृतमित्यादिस्थलवत् औपचारिकः इत्यंगीकारादुपपत्तिः । परार्थानुमानलक्षणं तु न्यायप्रयोज्यत्वे सत्यनुमानत्वम् । न्यायत्वं च परिभाषाविशेषविषयत्वम् । विशेष्यमात्रोक्तौ स्वार्थानुमाने, न्यायप्रयोज्यत्वमात्रोक्तौ न्यायध्वंसे चातिव्याप्तिः । अतः उभयोपादनम् । अनेन वाक्येन प्रतिपादितात् = एतद्वाक्येन व्याप्तिपक्षधर्मत्वेन बोधितात् । अत्र इदंशब्देन पंचावयववाक्यं परामृश्यते । प्रयोज्यत्वं तृतीयार्थः । अवयवनामान्याह—प्रतिज्ञेत्यादिना । अवयवस्वरूपाण्युदाहरति—पर्वतो वह्निमानित्यादिना । उदाहृतवाक्ये प्रतिज्ञादिविभागमाह—पर्वतो वह्निमानिति प्रतिज्ञेत्यादिना । अत्र बोधरीतिस्त्वित्थम् । प्रतिज्ञावयवात् वह्निमदभिन्नः पर्वत इति । धूमवत्त्वात्, इत्यत्र विशिष्टात् भावप्रत्ययो विशेषणमभिधत्ते इति न्यायेन धूमवत्त्वं धूम एव । ततश्च धूमादिति फलितो हेतुः । ज्ञानज्ञाप्यत्वं पंचम्यर्थः । ज्ञाने धूमस्य विषयितयान्वयः । तथाच हेत्ववयवाद् धूमविषयकज्ञानज्ञाप्यत्वम् इति । उदाहरणात् यो यः स सः इत्यादिपदानां स्वसमभिव्याहृतवह्निपदस्य धूमव्यापकवह्निबोधने तात्पर्यग्राहकतया धूमवान् धूमव्यापकवह्निमानिति बोधः । उपनयवाक्ये थाल्प्रत्ययस्याश्रयत्वमर्थः । तच्छब्दस्य वह्निव्याप्यधूमः अर्थः । इदंशब्देन पर्वतः परामृश्यते । तथाच वह्निव्याप्यधूमवान् पर्वतः इति बोधः । निगमनवाक्ये पञ्चम्यन्ततच्छब्दस्य वह्निव्याप्यधूमपरतया पंचम्याः ज्ञानज्ञाप्यत्वार्थकतया च वह्निव्याप्यधूमज्ञानज्ञाप्यवह्निमान् पर्वत इति बोधः । अत्र पूर्वपूर्वबोधोत्पन्नसंस्कारसहितचरमवाक्यजनितस्य तावद्वाक्यार्थविषयकसमूहालंबनबोधस्य अनन्तरं मानसिकः वह्निव्याप्यधूमवान् पर्वत इति परामर्शो जायते । पक्षधर्मताज्ञानं व्याप्तिस्मृतिश्च खण्डशाब्दबोधेनैवेति मन्तव्यम् । स्वार्थानुमितिपरार्थानुमित्योरिति । इदं नवीनमताभिप्रायेण । तन्मते हि फलायोगव्यवच्छिन्नं कारणं करणमित्येव करणलक्षणम्, न तु व्यापारवदिति । येन फलायोगः फलासंबन्धः व्यवच्छिद्यते तत्करणमिति तदर्थः । यस्मिन् कारणे सति फलम् अविलम्बेन जायते तत्करणमिति

परामर्शानुपदम् अनुमितिरेवेति तस्य करणत्वम्। अत्र शाब्दपरामर्शस्थले व्याप्तिस्मृतिपक्षधर्मताज्ञानं विनैवानुमित्युत्पत्त्या फलोपधायकस्य तस्यैव करणत्वात् नवीनैः सर्वत्रैव लिंगपरामर्शस्यानुमानत्वमंगीकृतम् इति तत्त्वम्। यद्वा लिङ्गपरामर्श एव इत्यस्य लिङ्गविशेष्यकव्याप्तिप्रकारकज्ञानमेव इत्यर्थः[1]। एवकारेण लिंगं ज्ञायमानं सत् करणमिति मतनिराकरणम्। लिंगस्य करणत्वे अतीतानागतलिङ्गस्थले अनुमित्यनुपपत्तेः। अनुमानमुपसंहरति—तस्मादिति।

**लिंगं त्रिविधम् अन्वयव्यतिरेकि केवलान्वयि केवलव्यतिरेकि चेति। अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि। यथा वह्नौ साध्ये धूमवत्त्वम्। यत्र धूमः तत्र वह्निः, यथा महानसः इत्यन्वयव्याप्तिः। यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति, यथा महाह्रदः इति व्यतिरेकव्याप्तिः।**

लिंगं विभजते—लिंगं त्रिविधमिति।—अन्वयेति। अन्वयश्च व्यतिरेकश्च तावत्र स्तः इत्यन्वयव्यतिरेकि। केवलो व्यतिरेकाभावविशिष्टोऽन्वयोऽस्यास्तीति केवलान्वयि। केवलोऽन्वयाभावविशिष्टो व्यतिरेकोऽस्यास्तीति केवलव्यतिरेकि। सर्वांगीकृतव्याप्तिं प्रथममाह—अन्वयेनेति। अन्वयेन = अन्वयसहचारेण। व्यतिरेकेण=व्यतिरेकसहचारेण। तथा चान्वयसहचारव्यतिरेकसहचारोभयज्ञानग्राह्यव्याप्तिकत्वम् अन्वयव्यतिरेकित्वम्। अन्वयसहचारमात्रग्राह्यव्याप्तिकत्वं केवलान्वयित्वम्। व्यतिरेकसहचारमात्रग्राह्यव्याप्तिकत्वं केवलव्यतिरेकित्वम्। यद्वा अन्वयः= साध्यान्वयः। व्यतिरेकः= साध्याभावः। तृतीयायाः निरूपितत्वमर्थः। तथाचान्वयनिरूपितव्याप्तिमत्त्वे सति व्यतिरेकनिरूपितव्याप्तिमत्त्वम् अन्वयव्यतिरेकिणोर्लक्षणम्। अन्वयव्याप्तिमत्त्वं च हेत्वधिकरणवृत्त्यन्यन्ताभावाप्रतियोगिसाध्याधिकरणवृत्तित्वम्। व्यतिरेकव्याप्तिमत्त्वं च साध्याभावव्यापकीभूताभावप्रतियोगित्वम्। तच्च

---

१ वस्तुतस्तु एतादृशोऽर्थः न मूलकृत्संमतः। अत एव 'व्यापारवत्कारणं करणमिति मते परामर्शद्वारा व्याप्तिज्ञानं करणम्' इति मूलकृत् स्वव्याख्याने वदति।



साध्याभावाधिकरणवृत्त्यत्यन्ताभावाप्रतियोग्यभावप्रतियोगित्वम्। तथा च पर्वतो वह्निमान्, धूमात् इत्यत्र हेतुः धूमः। तदधिकरणं महानसः। तद्वृत्तिः अत्यन्ताभावः न हि वह्न्यभावः भवितुमर्हति, किन्तु घटाद्यभाव एव। तत्प्रतियोगी घटादिः। तदप्रतियोगि साध्यं वह्निरूपसाध्यम्। तदधिकरणं महानसः। तद्वृत्तित्वं धूमे इति समन्वयः। व्यतिरेकव्याप्तिसमन्वयश्चैवम्। साध्यं वह्निः। साध्याभावो वह्न्यभावः। तदधिकरणं ह्रदः। तद्वृत्तिर्योऽत्यन्ताभावः, न हि धूमाभावाभावः, परन्तु धूमाभावः। तत्प्रतियोगी धूमः। तदप्रतियोग्यभावः धूमाभावः। तत्प्रतियोगित्वं च धूमे वर्तत इति। अत्रान्वयव्यतिरेकिलक्षणे अन्वयव्याप्तिमत्त्वमात्रोक्तौ केवलान्वयिनि घटोऽभिधेयः, प्रमेयत्वात्, इत्यत्र प्रमेयत्वरूपहेतौ अतिव्याप्तिः। अत्र घटः पक्षः। अभिधेयत्वं साध्यम्। प्रमेयत्वं हेतुः। तदधिकरणं घटादिः। तद्वृत्तिर्योऽत्यन्ताभावः, न हि अभिधेयत्वाभावः; सर्वत्र अभिधेयत्वस्य विद्यमानत्वात्। किन्तु पटाद्यभावः। तदप्रतियोगि साध्यम् अभिधेयत्वरूपं साध्यम्। तदधिकरणं घटादिः। तद्वृत्तित्वं प्रमेयत्वे। अतः तद्वारणाय व्यतिरेकव्याप्तिमत्त्वदलम्। तन्निवेशे तु तत्र साध्याभावस्याप्रसिद्धत्वेन तद्घटितव्यतिरेकव्याप्तिमत्त्वस्य तत्राभावान्नातिव्याप्तिः। व्यतिरेकव्याप्तिमत्त्वमात्रोक्तौ पृथिवी इतरभिन्ना, गन्धवत्त्वात्, इत्यत्र 'गन्धवत्त्वरूपकेवलव्यतिरेकिहेतौ अतिव्याप्तिः। अत्र पृथिवी पक्षः। पृथिवीतरभेदः साध्यः। गन्धवत्त्वं हेतुः। साध्याभावः पृथिवीतरभेदाभावः। तदधिकरणं जलादि। तद्वृत्तिर्योऽत्यन्ताभावः, न हि गन्धाभावाभावः, परन्तु गन्धाभावः। तत्प्रतियोगी गन्धः। तदप्रतियोगी योऽभावः गन्धाभावः। तत्प्रतियोगित्वं गन्धे इति। तद्वारणायान्वयव्याप्तिमत्त्वं निवेशनीयम्। तन्निवेशे तु गन्धाधिकरणे सर्वत्रापि पृथिवीतरभेदस्य वर्तमानतया हेतुव्यापकसाध्यसामानाधिकरण्यरूपान्वयव्याप्तेः प्रकृतहेतौ सत्त्वेऽपि पृथिवीमात्रस्य पक्षत्वेन जलादौ हेतुसाध्ययोरभावेन च दृष्टान्ताभावेन अन्वयव्याप्तिनिश्चयस्य असंभवेन वस्तुतः अन्वयव्याप्तिमत्त्वस्य सत्त्वेऽपि निश्चितान्वयव्याप्तिमत्त्वस्यैव अन्वय-

व्यतिरेकिलक्षणघटकत्वेनांगीकारात् गन्धवत्त्वरूपहेतौ निश्चितान्वयव्याप्तिमत्त्वस्याभावान्नातिव्याप्तिः।

**अन्वयमात्रव्याप्तिकं केवलान्वयि। यथा घटोऽभिधेयः, प्रमेयत्वात्, पटवत् इत्यत्र प्रमेयत्वाभिधेयत्वयोः व्यतिरेकव्याप्तिर्नास्ति, सर्वस्यापि प्रमेयत्वात् अभिधेयत्वाच्च।**

केवलान्वयिलिंगं लक्षयति—अन्वयेति। निरवच्छिन्नवृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम्। संयोगाभावगगनाभावयोस्संग्रहाय निरवच्छिन्नेति वृत्तिमदिति ति च विशेषणद्वयम्। वृत्तौ निरवच्छिन्नत्वनिवेशात् संयोगाभावाभावः ग्रहीतुं न शक्यते। तस्य संयोगरूपतया सावच्छिन्नवृत्तिकत्वात्। किन्तु घटपटाद्यभाव एव। तत्प्रतियोगित्वं घटपटादौ। अप्रतियोगित्वं संयोगाभावे इति। एवं गगनस्यावृत्तिमत्तया वृत्तिमदत्यन्ताभावः न गगनाभावाभावः, अपि तु घटपटाद्यभाव एव भवतीति तदप्रतियोगित्वं गगनाभावे। मात्रपदस्य इतरव्यवच्छेदोऽर्थः। अतः व्यतिरेकव्याप्तिशून्यत्वे सति अन्वयव्याप्तिमत्त्वं केवलान्वयिनो लक्षणम्। ईश्वरीयज्ञानादीनां सर्वविषयकतया ईश्वरीयज्ञानादिविषयकत्वस्य सर्वस्मिन्नपि जगति वर्तमानतया ईश्वरप्रमाविषयत्वाभिधाविषयत्वयोः सर्वत्र सत्त्वात्तदभावाप्रसिद्धया अत्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वस्य हेतौ सत्त्वादिति। अत्र हेतुः प्रमेयत्वम्। तदधिकरणं घटादिः। तद्वृत्तिर्योऽत्यन्ताभावः घटाद्यभावः एव, न तु अभिधेयत्वाभावः, तस्याप्रसिद्धत्वात्। तत्प्रतियोगी घटादिः। तदप्रतियोगि यत्साध्यम् अभिधेयत्वरूपं साध्यम्। तदधिकरणं घटादि। तद्वृत्तित्वं प्रमेयत्वे वर्तत इति समन्वयः। अन्वयव्याप्तिमत्त्वमात्रोक्तौ अन्वयव्यतिरेकिण्यतिव्याप्तिः। तद्वारणाय व्यतिरेकव्याप्तिशून्यत्वम्। तन्निवेशे अन्वयव्यतिरेकिणि उभयव्याप्तिसत्त्वान्नातिव्याप्तिः। व्यतिरेकव्याप्तिशून्यत्वमात्रोक्तौ व्यभिचारिण्यतिव्याप्तिः; तत्र उभयव्याप्त्यभावात् व्यतिरेकव्याप्तिशून्यत्वसत्त्वात् इति।

**व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि। यथा पृथिवी इतरेभ्यो भिद्यते, गन्धवत्त्वात्। यत् इतरेभ्यो न भिद्यते, न तत् गन्धवत्, यथा जलम्। न चेयं तथा। तस्मान्न तथा। अत्र यद्गन्धवत् तदितरभिन्नमिति अन्वयदृष्टान्तो नास्ति, पृथिवीमात्रस्य पक्षत्वात्।**



केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति। अन्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वं केवलव्यतिरेकिणो लक्षणम्। तच्च पक्षतावच्छेदकसमनियतसाध्यकत्वरूपम्। अत्र साध्यः पृथिवीतरभेदः तदभावः पृथिवीतरभेदाभावः। तदधिकरणं जलादिकम्। तद्वृत्त्यत्यन्ताभावः, न गन्धाभावाभावः, किन्तु गन्धाभाव एव। तत्प्रतियोगी गन्धः। अप्रतियोगी योऽभावः गन्धाभावः। तत्प्रतियोगित्वं गन्धे। अत्रान्वयव्याप्तिरपि संभवति। किन्तु दृष्टान्ताभावान्न कार्यकारिणी। यथा हेत्वधिकरणं पुष्पादिः। तद्वृत्तिः योऽत्यन्ताभावः, न हि इतरभेदाभावः, किन्तु पटाद्यभावः। तत्प्रतियोगी पटादिः। तदप्रतियोगी यः साध्यः पृथिवीतरभेदः। तदधिकरणं पृथिवी। तद्वृत्तित्वस्यापि गन्धे सत्त्वेन अन्वयव्याप्तिशून्यत्वासंभवेऽपि अत्र लक्षणे निश्चितान्वयव्याप्तिशून्यत्वस्यैव निवेशनीयतया अत्र पृथिवीमात्रस्य पक्षत्वेन जलादौ हेतुसाध्ययोरभावेन च यत्र गन्धः तत्रेतरभेदः इत्यत्रान्वयदृष्टान्ताभावेनान्वयव्याप्तिनिश्चयासंभवेन निश्चितान्वयव्याप्तिशून्यत्वं गन्धरूपहेतोः उपपद्यते इति लक्षणसमन्वयः। अन्वयव्याप्तिशून्यत्वमात्रोक्तौ पर्वतो धूमवान्, वह्नेः, इत्यत्र व्यभिचारिहेतावतिव्याप्तिः। व्यतिरेकव्याप्तिमत्त्वमात्रोक्तौ अन्वयव्यतिरेकिण्यतिव्याप्तिरिति दलद्वयम्। केवलव्यतिरेकिस्थले पंचावयववाक्यमुदाहरति—यथेत्यादिना। यत्=जलम्। इतरेभ्यो न भिद्यते=इतरभेदाभाववत्। तत् = जलम्। न गन्धवत् = गन्धाभाववत्। न चेयं तथा = इयं पृथिवी न तथा, गन्धाभाववती न, किंतु गन्धाभावाभाववती, गन्धवतीति फलितोऽर्थः। तस्मात् = गन्धाभावाभाववत्त्वात्, गन्धवत्त्वात्। न तथा = इतरभेदाभाववती न, किन्तु इतरभेदाभावाभाववती, इतरभेदवतीति पर्यवसितोऽर्थः।

**सन्दिग्धसाध्यवान् पक्षः। यथा धूमवत्त्वे हेतौ पर्वतः।**

पूर्ववाक्ये पक्षप्रसंगात् तल्लक्षणमाह—संदिग्धेति। संपूर्वकदिहधातोः सन्देहः अर्थः। क्तप्रत्ययस्य विषयोऽर्थः। तस्य साध्ये अन्वयः।

तथाच सन्देहविषयसाध्याश्रयत्वं पक्षस्य लक्षणम्। सन्देहः पर्वतो वह्निमान् नवेति सन्देहः। तद्विषयसाध्यं वह्निरूपसाध्यम्। तदाश्रयत्वं पर्वते इति समन्वयः। साध्यवत्त्वमात्रोक्तौ निश्चितसाध्यवत्यतिव्याप्तिः। अतः सन्दिग्धेति। एवमपि पर्वते सन्दिग्धस्य साध्यस्याश्रये महानसादौ अतिव्याप्तिवारणाय साध्यप्रकारकसन्देहविशेष्यत्वं वक्तव्यम्। अतः सपक्षे सन्देहाभावात् साध्यप्रकारकसन्देहविशेष्यत्वं तत्र नास्तीति नातिव्याप्तिः। नन्वेवमपि साध्यतावच्छेदकांशे साध्यस्यापि विशेष्यतया साध्ये साध्यप्रकारकसन्देहविशेष्यता वर्तते इति तत्रातिव्याप्तिरिति चेत्, न; साध्यप्रकारकसन्देहनिरूपितमुख्यविशेष्यत्वविवक्षणात्। साध्यस्य साध्यतावच्छेदकांशे विशेष्यत्वेऽपि पक्षांशे प्रकारतया विशेष्यत्वविशेषणत्वरूपधर्मद्वयसत्त्वात् साध्यस्य न मुख्यविशेष्यत्वम्। विशेष्यता च प्रकारत्वासमानाधिकरणैव मुख्या भवति इति नातिव्याप्तिः। न च एवमपि पर्वतो वह्निमान् न वा, भूतलं घटवत् न वा, इत्यादिसमूहालंबनसंशये साध्यप्रकारकसंशयविशेष्यत्वस्य भूतलादौ सत्त्वात्तत्रातिव्याप्तिरिति वाच्यम्। साध्यनिष्ठप्रकारतानिरूपितसंशयमुख्यविशेष्यतेति परिष्काराददोषात्। उक्तसमूहालंबने भूतलांशे साध्यतदभावयोरप्रकारत्वात् तन्निष्ठप्रकारतानिरूपितविशेष्यता भूतले नास्तीति नातिव्याप्तिः अत्रेदं बोध्यम्— घनगर्जितेन संशयं विनापि मेघानुमानात् नवीनैः इयं पक्षता नांगीकृता। तेषां मते सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता। सिषाधयिषा=अनुमिनुयामितीच्छा। सिद्धिः=पक्षे साध्यनिश्चयः। पर्वतो वह्निमानित्यनुमितिं प्रति साध्यनिश्चयः प्रतिबन्धकः। सिषाधयिषा उत्तेजिका। अतः प्रतिबन्धकसत्त्वेऽपि उत्तेजिकाबलात् अनुमितिर्जायते इति सिषाधयिषाभावविशिष्टसिद्धिरेव प्रतिबन्धिका। यत्र सिषाधयिषा सिद्धिश्च, तत्र सिषाधयिषाविरहविशिष्टसिद्ध्यभावसत्त्वादनुमितिः। विस्तरस्तु पितृचरणकृतप्रकाशे। मतान्तरे अनुमित्युद्देश्यत्वं पक्षत्वं विज्ञेयम्।

निश्चितसाध्यवान् सपक्षः। यथा अत्रैव महानसः। निश्चितसाध्याभाववान् विपक्षः। यथा अत्रैव महाह्रदः।



पक्षनिरूपणानुपदं सपक्षं निरूपयति-निश्चितेति। इतिश्चितोति निश्चयोऽर्थः। क्तप्रत्ययस्य विषयत्वम्। तथा च निश्चयविषयसाध्याश्रयत्वं सपक्षस्य लक्षणम्। महानसो वह्निमानिति निश्चयविषयवह्निरूपसाध्याश्रयत्वसत्त्वान्महानसादौ समन्वयः। निश्चयपदाभावे पक्षे अतिव्याप्तिः। एवं महानसे निश्चयविषयस्य साध्यस्य पक्षे आश्रयत्वमादाय पुनरपि पक्षे अतिव्याप्तिः। अतः साध्यप्रकारकनिश्चयविशेष्यत्वं विवक्षणीयम्। साध्यप्रकारकनिश्चयविशेष्यत्वस्य पक्षे अभावान्नातिव्याप्तिः। अत्रापि वह्न्यादिनिष्ठवह्नित्वनिरूपितविशेष्यतामादाय वह्न्यादौ, महानसः वह्निमान्, भूतलं घटवत्, इत्यादिसमूहालंबननिश्चयविशेष्यतामादाय भूतलादौ चातिव्याप्तिवारणाय साध्यनिष्ठप्रकारतानिरूपितनिश्चयीयमुख्यविशेष्यताश्रयत्वमिति लक्षणं परिष्करणीयम्। विपक्षं लक्षयति-निश्चितेति। निश्चयविषयसाध्याभावाश्रयत्वं लक्षणम्। पर्वतो वह्निमानित्यनुमितौ विपक्षे महाह्रदादौ ह्रदो वह्न्यभाववान् इति निश्चयविषयीभूतः साध्याभावः वह्न्यभावः। तदाश्रयत्वं ह्रदादाविति समन्वयः। निश्चितपदाभावे ह्रदो वह्निमान्, धूमात्, इत्यादौ ह्रदादिरूपपक्षेऽपि साध्याभावाश्रयत्वस्य सत्त्वादतिव्याप्तिः। तन्निवेशे तु अनुमितिपक्षे तत्र साध्याभावसंशयस्यैव सत्त्वेन निश्चयाभावेन निश्चितसाध्याभावाश्रयत्वासत्त्वान्नातिव्याप्तिः। एवमपि ह्रदो वह्निमान् इत्यनुमितिकाले पक्षरूपह्रदेऽपि घटपटाद्यन्तर्भावेण निश्चयविषयस्य वह्न्यभावस्य वर्तमानतया अतिव्याप्तिवारणाय साध्याभावप्रकारकनिश्चयविशेष्यत्वं विवक्षणीयम्। तथाच अनुमितिकाले साध्याभावप्रकारकनिश्चयविशेष्यत्वस्य ह्रदे अभावान्नातिव्याप्तिः। अत्रापि पूर्ववत् साध्यादावतिव्याप्तिवारणाय, गुणो वह्न्यभाववान्, ह्रदो जलवान्, इत्यादिसमूहालम्बननिश्चयविषयीभूतह्रदेऽतिव्याप्तिवारणाय च साध्याभावत्वावच्छिन्नप्रकारतानिरूपितनिश्चयीयमुख्यविशेष्यताश्रयत्वपर्यन्तं लक्षणं वक्तव्यम्। तथाच ह्रदांशे वह्न्यभावस्याप्रकारत्वेन साध्याभावनिष्ठप्रकारतानिरूपितनिश्चयीयमुख्यविशेष्यताश्रयत्वस्य पक्षे ह्रदादावभावान्नातिव्याप्तिः। एवं सद्धेतवो निरूपिताः। सद्धेतुसामान्यलक्षणं तु व्याप्तिपक्षधर्मताविशिष्टत्वम्॥

**सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासाः ।**

प्रसङ्गात् सद्धेतुनिरूपणानन्तरं प्रतिपक्षिणा प्रयुक्तहेतौ दोषोद्भावनाय असद्धेतून् "सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः" इति सूत्रक्रमानुरोधेन विभजते—सव्यभिचारेति । सूत्रोक्तः प्रकरणसमः सत्प्रतिपक्षः, साध्यसमः असिद्धः, अतीतकालो बाधः, इति बोध्यम् । हेतुवदाभासन्ते इति हेत्वाभासाः । अत्र वत्पदस्य सादृश्यम्, आङ्पूर्वकभासधातोः आभासश्चार्थः । आभासः भ्रमः । आख्यातस्य विषयत्वम् अर्थः । सादृश्ये हेतोः आधेयत्वसंबन्धेन, सादृश्यस्य च आभासे प्रकारतानिरूपकत्वसंबन्धेनान्वयः । अत्र सादृश्यं व्याप्तिपक्षधर्मताविशिष्टत्वरूपम् । हेतुपदं सद्धेतुपरम् । एवं च सद्धेतुनिष्ठसादृश्यप्रकारकभ्रमविषयाः सव्यभिचारादयः पञ्च इति बोधः । इमे एव दुष्टहेतुपदेन व्यवह्रियन्ते । दुष्टत्वं च दोषविशिष्टत्वम् । दोषाः व्यभिचारादयः । तथाच व्याप्तिपक्षधर्मत्वोभयाभाववत्त्वम् असद्धेतूनां लक्षणम् । व्याप्त्यभाववत्त्वमात्रोक्तौ ह्रदो वह्निमान्, धूमादित्यत्र बाधितहेतौ व्याप्त्यभाववत्त्वस्याभावात् अव्याप्तिः । पक्षधर्मत्वाभाववत्त्वमात्रोक्तौ पर्वतो धूमवान्, वह्नेः इत्यत्र व्यभिचारिहेतौ पक्षधर्मत्वाभाववत्त्वस्याभावादव्याप्तिः । व्याप्तिपक्षधर्मत्वान्यतराभाववत्त्वोक्तावपि बाधितव्यभिचारिणोः तदन्यतरस्य सत्त्वात् अव्याप्तिः अतः उभयाभावनिवेशः । तदुभयाभाववत्त्वविवक्षणे तु बाधितव्यभिचारिणोरपि एकसत्त्वे द्वयं नास्तीति प्रतीत्या उभयाभाववत्त्वस्याक्षतत्वेन न कुत्राप्यव्याप्तिप्रसक्तिः । एवं व्याप्तिविशिष्टपक्षधर्मत्वाभावरूपविशिष्टाभावस्यापि असद्धेतुलक्षणत्वमुपपद्यते एव । ह्रदो वह्निमान्, धूमादित्यादिबाधितहेतौ पक्षधर्मत्वरूपविशेष्याभावप्रयुक्तः विशिष्टाभावः, पर्वतो धूमवान्, वह्नेः, इत्यत्र व्याप्तिरूपविशेषणाभावप्रयुक्तः विशिष्टाभाव इति सर्वत्रोपपत्तिः । नन्वेवमपि उत्पत्तिकालावच्छिन्नघटो गन्धवान्, पृथिवीत्वादित्यत्र पृथिवीत्वरूपबाधितहेतौ व्याप्तिपक्षधर्मतयोरुभयोरपि सत्त्वात् व्याप्तिपक्षधर्मत्वोभयाभावलक्षणस्य व्याप्तिविशिष्टपक्षधर्मत्वाभावरूपलक्षणस्य च तत्राभावेन अव्याप्तिरिति चेत्, न; अत्र लक्षणद्वये पक्षधर्मतायाः साध्याश्रयपक्षवृत्तित्वरूपत्वेन विवक्षणीयतया लक्षणद्वयेऽपि अव्याप्तिप्रसक्त्यभावात् ।



न च तर्हि उत्पत्तिकालावच्छिन्नघटो गन्धवान्, पृथिवीत्वादित्यत्र व्याप्तिपक्षधर्मताविशिष्टत्वरूपसद्धेतुलक्षणस्यातिव्याप्तिरिति वाच्यम् । तत्रापि पक्षधर्मतायाः साध्याश्रयपक्षवृत्तित्वरूपत्वेन परिष्करणीयतया तादृशपक्षधर्मतायाः प्रकृतपृथिवीत्वहेतावभावात अतिव्याप्तेरभावात् । अथवा सव्यभिचाराद्यन्यतमत्वम् असद्धेतुलक्षणम् । तदभाववत्त्वं सद्धेतुत्वम् । एवं च उत्पत्तिकालावच्छिन्नघटो गन्धवान्, पृथिवीत्वात्, इत्यत्र पृथिवीत्वरूपहेतोः बाधिततया सव्यभिचाराद्यन्यतमान्तर्गतत्वेन दुष्टहेतुत्वमेव । अतो नानुपपत्तिः । दोषलक्षणं तु अनुमितितत्करणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वम् । ह्रदो वह्निमान्, धूमादित्यत्र वह्न्यभाववद्ध्रदरूपबाधस्य । ह्रदो वह्निमानित्यनुमितिं प्रति तदभाववत्ताज्ञानत्वेन प्रतिबन्धके ह्रदो वह्न्यभाववानिति यथार्थज्ञाने विषयतया लक्षणसमन्वयः अस्मिन्नेवानुमितौ वह्न्यभावव्याप्यवद्ध्रदरूपसत्प्रतिपक्षोऽपि भवति । तत्र समन्वयस्त्वित्थम् — ह्रदो वह्निमान्, धूमात् इत्यत्र वह्न्यभावव्याप्यजलवान् ह्रदः इति ज्ञाने जाते वह्निमान् ह्रदः इति ज्ञानं न जायत इति अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वं सत्प्रतिपक्षस्य, वह्न्यभावव्याप्यवद्ध्रदरूपसत्प्रतिपक्षस्य तदभावव्याप्यवत्ताज्ञानमुद्रया प्रतिबन्धकत्वात् । अनुमितिप्रतिबन्धकज्ञानविषयत्वमात्रोक्तौ पर्वतो वह्निमान्, प्रमेयत्वात्, इत्यत्र वह्न्यभाववद्वृत्तिप्रमेयत्वरूपव्यभिचारेऽव्याप्तिः । तत्र वह्न्यभाववद्वृत्ति प्रमेयत्वमिति निश्चयस्य वह्न्यभाववद्वृत्ति प्रमेयत्वम् इति व्याप्तिज्ञानं प्रत्येव तदभाववत्ताज्ञानमुद्रया प्रतिबन्धकत्वात् अनुमितिप्रतिबन्धकत्वाभावात् । अतः करणपदम् । एतन्निश्चयस्य अनुमितिकरणव्याप्तिज्ञानप्रतिबन्धकतया व्यभिचारेऽपि लक्षणसमन्वयः । अनुमितितत्करणप्रतिबन्धकज्ञानविषयत्वमात्रोक्तौ बाधे अव्याप्तिः, तस्यानुमितिप्रतिबन्धकतया तत्करणप्रतिबन्धकत्वाभावात् । अतः अनुमितितत्करणान्यतरेति । तन्निवेशे तु बाधनिश्चयस्यानुमितिप्रतिबन्धकत्वेनान्यतरप्रतिबन्धकत्वात् समन्वयः । दोषाणां हेतुनिष्ठत्वं च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकधर्मवत्त्वसंबन्धेन । ह्रदो वह्निमान्, धूमादिति बाधस्थले स्वं वह्न्यभाववद्ध्रदः । तद्विषयकं ज्ञानं वह्न्यभाववान् ह्रदः धूमश्चेति समूहालंबनरूपं

ग्राह्यम्। तद्विषयभूतं प्रकृतहेतुतावच्छेदकं धूमत्वं। तद्वत्त्वसंबन्धेन वह्न्यभाव-वद्ध्रदो धूमे। अतो हेतूनां दुष्टत्वव्यवहारः।

**सव्यभिचारोऽनैकान्तिकः। स त्रिविधः साधारणासाधारणानुपसंहारिभेदात्। तत्र साध्याभाववद्वृत्तिः साधारणः। यथा पर्वतो वह्निमान्, प्रमेयत्वात् इति। अत्र प्रमेयत्वस्य वह्न्यभाववति ह्रदे विद्यमानत्वात्।**

क्रमप्राप्तं सव्यभिचारं लक्षयति—सव्यभिचारोऽनैकान्तिक इति। अत्र चानैकान्तिकसव्यभिचारशब्दौ पर्यायौ पुरुषभेदापेक्षया लक्ष्य-लक्षणत्वेनावस्थितौ। यस्यानैकान्तिकपदार्थोऽप्रसिद्धः, प्रसिद्धश्च सव्यभि-चारपदार्थः, तं प्रत्यनैकान्तिक इति लक्ष्यनिर्देशः। सव्यभिचार इति लक्ष-णम्। एवं विपरीतमपि[1]। व्यभिचारेण सह वर्तत इति सव्यभिचारः। व्यभिचारः = अन्यत्रापि संबन्धः प्रकृतसाध्यवदन्यवृत्तित्वम्, तद्विशिष्ट इत्यर्थः। एकश्चासावन्तश्चैकान्तः। अन्तोः निश्चेतव्यो धर्मः कोटिः। एकान्ते विद्यमानः ऐकान्तिकः। एककोटिसमानाधिकरणः। एकधर्मनिश्चयप्रयोजक इति यावत्। न ऐकान्तिकः, न एकधर्मनिश्चयप्रयोजकः साध्यतदभाव-रूपोभयान्त( कोटि )समानाधिकरणः। संशयसंपादक इति यावत्। तथाच साध्यतदभावसंशयप्रयोजकोऽनैकान्तिकः।

नन्वेतादृशानैकान्तिकत्वस्य कथन् असाधारणहेतौ समन्वयः। शब्दो नित्यः, शब्दत्वादित्यत्र मीमांसकनैयायिकमतयोरुभयोरपि शब्दत्वस्य नित्य-त्वानित्यत्वासामानाधिकरण्यादिति चेत; अत्र हेतोः साध्यतदभावसामानाधि-करण्यं नियमेन साक्षादेवेति न विवक्षितम्, किन्तु साक्षात्परंपरासाधारण्येन। साधारणानुपसंहारिणोः हेत्वोः साक्षादेव उभयकोटिसामानाधिकरण्यम्।

---

१ वस्तुतस्तु सव्यभिचारानैकान्तिकयोः समानार्थकत्वेऽपि विभाजकवाक्ये सव्यभिचारपदस्यैव ग्रहणात् "सव्यभिचारं विभजते" इति दीपिकास्वारस्याच्च सव्यभिचार इति लक्ष्यनिर्देशः, अनैकान्तिक इति लक्षणमिति ग्रन्थकृदभिमत-मिति भाति।



असाधारणस्थले तु स्वाभावद्वारा उभयकोटिसामानाधिकरण्यम्। शब्दत्वा-भावस्य नित्यानित्यसाधारण्याच्छब्दत्वे लक्षणसमन्वयात्। सव्यभिचारं विभजते—स त्रिविध इति। साधारणाद्यन्यतमत्वं सव्यभिचारसामान्य-लक्षणम्। साधारण इत्यस्य साध्यतदितरसंबन्धीत्यर्थकत्वेऽपि तत्र साध्यवद्-वृत्तित्वांशस्य व्याप्तिज्ञानाप्रतिबन्धकत्वादाह—साध्याभाववद्वृत्तिरिति[1]। साध्यस्याभावः साध्याभावः। सः अस्मिन्निति साध्याभाववान्। साध्या-भाववति वृत्तिः यस्मिन् सः साध्याभाववद्वृत्तिः। तस्य भावः साध्याभाव-वद्वृत्तित्वम्। साध्यस्येति षष्ठ्याः प्रतियोगितानिरूपकत्वमर्थः। प्रति-योगितायां आधेयत्वसंबन्धेन साध्यस्यान्वयः। साध्याभाववतीति सप्तम्याः निरूपितत्वमर्थः। वृत्तिः वर्तनम्। यस्मिन् सः इति सप्तम्याः आधेयत्व-मर्थः। अस्य च साध्याभाववद्वृत्तित्वे अन्वयः। तथा च यद्वृत्तिसाध्यनिष्ठ-प्रतियोगिताकाभाववन्निरूपितवृत्तित्वमिति विग्रहवाक्यजन्यबोधः। विग्रह-वाक्यात् यादृशबोधो जायते समासवाक्यात् तद्विपरीतबोधो जायते इति नियमानुसारात् साध्याभावाधिकरणनिरूपितवृत्तिताविशिष्टः इति समास-वाक्यजन्यो बोधः। तत्र भावार्थकत्वप्रत्ययसंयोजने च वृत्तिताविशिष्टत्व-मिति बोधः। वृत्तिताविशिष्टत्वं च 'प्रकृत्यर्थे प्रकारीभूतधर्मः भावप्रत्ययार्थः' इति नियमेन तादृशवृत्तितारूपमेव। तथाच साध्यनिष्ठप्रतियोगितानिरूपका-भावाधिकरणनिरूपितवृत्तित्वं साधारणस्य लक्षणम् इत्यायातम्। पर्वतो वह्निमान्, प्रमेयत्वादित्यत्र साधारणे साध्यः वह्निः। तन्निष्ठा या प्रतियोगिता वह्निर्नास्तीत्याकारकप्रतीतिसिद्धाऽभावीया वह्नित्वावच्छिन्ना प्रतियोगिता। तन्निरूपको योऽभावः वह्न्यभावः। तदधिकरणं ह्रदः। तन्निरूपितवृत्तित्वं प्रमेयत्वे, इति समन्वयः। सद्धेतौ च नातिव्याप्तिः। तत्र साध्याभावः वह्न्य-भावः। तदधिकरणं ह्रदादिः। तन्निरूपितवृत्तित्वस्य धूमेऽभावात्। अस्य ज्ञानस्यानुमितितत्करणान्यतरप्रतिबन्धकत्वं च तदभाववत्तानिश्चयविधया

---

१ अत एव "यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः" इति कारिका-वलीव्याख्याने "वस्तुतो विपक्षवृत्तित्वमेव वाच्यम्; विरुद्धस्य साधारणत्वेऽपि दूषकताबीजस्य पार्थक्यात्" इति मुक्तावली।

व्याप्तिज्ञानप्रतिबन्धकत्वेन। वह्न्यभाववद्वृत्ति प्रमेयत्वं इति ज्ञाने वह्न्यभाववद्वृत्ति प्रमेयत्वमिति व्याप्तिज्ञानं न जायते इति बोध्यम्। अत्र साध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं देयम्। अन्यथा पर्वतो वह्निमान्, धूमात्-इत्यत्रातिव्याप्तिः। साध्यनिष्ठा प्रतियोगिता समवायसंबन्धावच्छिन्नवह्नित्वावच्छिन्ना प्रतियोगिता इति गृहीते तन्निरूपकाभावः समवायेन वह्निर्नास्तीति प्रतीतिसिद्धाभावः। तस्य पर्वते सत्त्वात्, तन्निरूपितवृत्तित्वस्य धूमे संभवात्। साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशे तु साध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभावस्य तत्र पर्वतादावभावात् तत्र धूमसत्त्वेऽपि नातिव्याप्तिः। एवं साध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकधर्मावच्छिन्नत्वमपि विशेषणं देयम्। नो चेत् सद्धेतावतिव्याप्तिः। साध्यतावच्छेदकसंबन्धावच्छिन्ना साध्यनिष्ठा प्रतियोगितेत्युक्तौ संयोगेन वह्निपटोभयं नास्तीति प्रतीतिसिद्धाभावीया वह्निपटोभयत्वावच्छिन्ना प्रतियोगिता। तन्निरूपकाभावः वह्निपटोभयाभावः। तदधिकरणं पर्वतः तन्निरूपितवृत्तित्वं धूमे। साध्यतावच्छेदकधर्मनिवेशे तु तस्य साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वार्थत्वविवक्षणात् उभयाभावीयप्रतियोगितायाः वह्नित्वातिरिक्तोभयत्वरूपधर्मावच्छिन्नतया तदनवच्छिन्नप्रतियोगिताककेवलवह्नित्वावच्छिन्नप्रतियोगिताकाभावाश्रयत्वस्य पर्वतादावभावान्नातिव्याप्तिः। साध्याभाववत्त्वं च स्वरूपसंबन्धेन। तेन पर्वतादौ कालिकादिसंबन्धेन वह्न्यभाववत्त्वेऽपि नातिव्याप्तिः। साध्याभावाधिकरणनिरूपितवृत्तितायां हेतुतावच्छेदकसंबन्धावच्छिन्नत्वं देयम्। अन्यथा वह्निमान्, धूमादिति सद्धेतावतिव्याप्तिः, संयोगेन वह्न्यभावाधिकरणे धूमावयवे समवायेन धूमस्य वृत्तेः। साध्याभावाधिकरणनिरूपितवृत्तितायां हेतुतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशे तु समवायसंबन्धेन धूमस्यस्वावयववृत्तित्वेऽपि हेतुतावच्छेदकसंयोगसबन्धावच्छिन्नवृत्तित्वाभावान्नातिव्याप्तिरिति। अत्र साध्याभावः इत्यस्य साध्यवद्भेद इत्यर्थः। तथा वृक्षः कपिसंयोगी इत्यादौ नातिव्याप्तिरित्यादिकमन्यत्र द्रष्टव्यम्।



**सर्वसपक्षविपक्षव्यावृत्तो हेतुरसाधारणः। यथा शब्दो नित्यः, शब्दत्वात् इति। अत्र शब्दत्वं हि सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं शब्दमात्रवृत्ति।**

पूर्वं साध्याभाववद्वृत्तिः साधारणः इत्युक्तत्वात् अनुपदम् असाधारण इत्युक्ते साध्याभाववदवृत्तिरिति सद्धेतुत्वशंकापरिहारायाह—सर्वसपक्षविपक्षेति। न विपक्षमात्रव्यावृत्तः, किन्तु सपक्षव्यावृत्तश्च यो हेतुः सः असाधारण इत्यर्थः। हेतुः हेतुत्वेनाभिमत इत्यर्थः। अतः तस्य सद्धेतुत्वाभावेऽपि न क्षतिः। सर्वेति सामान्याभावपरिचयाय। सपक्षः साध्यवान्। तद्व्यावृत्तत्वं तदवृत्तित्वम्। सर्वसपक्षविपक्षेभ्यो व्यावृत्तः सर्वसपक्षविपक्षव्यावृत्तः। पंचम्यर्थः निरूपितत्वम्। वि-आङ्पूर्वकवृत्धातोः व्यावृत्तिरर्थः। स च वृत्तिमत्त्वाभावः। क्तप्रत्ययस्याश्रयत्वम् अर्थः। तथा च सर्वसपक्षनिरूपितवृत्तित्वाभाववत्त्वे सति सर्वविपक्षनिरूपितवृत्तित्वाभाववत्त्वम् असाधारणस्य लक्षणम्। निश्चितसाध्यवान् सपक्षः। निश्चितसाध्याभाववान् विपक्षः। शब्दो नित्यः, शब्दत्वादित्यत्र शब्दस्य पक्षत्वेन साध्यसंशयसद्भावात् निश्चितसाध्यवत् गगनम्। तदवृत्तित्वं शब्दे। तदवृत्तित्वं शब्दत्वे। निश्चितसाध्याभाववत् घटादि। तदवृत्तित्वं घटत्वादौ। तदवृत्तित्वं च शब्दत्वे इति समन्वयः। सर्वसपक्षव्यावृत्तत्वमात्रोक्तौ शब्दो नित्यः कार्यत्वात् इत्यत्र कार्यत्वरूपविरुद्धहेतौ सपक्षगगनादिव्यावृत्ते अतिव्याप्तिः। विपक्षव्यावृत्तत्वस्यापि निवेशे कार्यत्वे घटपटादिविपक्षव्यावृत्तत्वस्याभावान्नातिप्रसंगः। सर्वविपक्षव्यावृत्तत्वमात्रोक्तौ पर्वतो वह्निमान्, धूमात् इत्यत्र धूमरूपसद्धेतौ विपक्षभूतह्रदादिनिरूपितवृत्तित्वाभावस्य सत्त्वादतिव्याप्तिः। सपक्षव्यावृत्तत्वनिवेशे सपक्षमहानसादिव्यावृत्तत्वस्य धूमे अभावान्नातिव्याप्तिः। सपक्षे सर्वत्वानिवेशे पर्वतो वह्निमान्, धूमादित्यत्र धूमस्य अयोगोलकरूपयत्किंचित्सपक्षव्यावृत्तत्वात् ह्रदादिसर्वविपक्षव्यावृत्तत्वाच्चातिव्याप्तिः। सपक्षे सर्वत्वनिवेशे तु सर्वसपक्षान्तर्गतमहानसादिव्यावृत्तत्वाभावान्नातिव्याप्तिः। विपक्षे सर्वत्वानिवेशे पर्वतो वह्निमान् जलादिति विरुद्धेऽतिव्याप्तिः। तत्र गुणादियत्किंचिद्विपक्ष-

व्यावृत्तत्वस्य महानसादिसर्वसपक्षव्यावृत्तत्वस्य च सत्त्वात्। विपक्षे सर्वत्वनिवेशे सर्वविपक्षान्तर्गतह्रदादिव्यावृत्तत्वस्य जलेऽसत्त्वान्नातिव्याप्तिः। नन्वेवमपि सर्वसपक्षवृत्तित्वघटत्वोभयाभावमादाय पर्वतो वह्निमान् धूमादिति सद्धेतौ सर्वविपक्षवृत्तित्वघटत्वोभयाभावमादाय शब्दो नित्यः कार्यत्वादिति विरुद्धे चातिव्याप्तिरिति चेत्, न; घटः शब्दवान्, घटत्वादित्यत्र गगनरूपे सपक्षे अनेकत्वरूपस्य सर्वत्वस्याप्रसिद्ध्या घटः शब्दाभाववान् घटत्वादित्यत्र विपक्षे गगने चानेकत्वरूपसर्वत्वस्याप्रसिद्ध्या अव्याप्तिवारणाय उभयत्रापि सर्वपदस्य सपक्षनिरूपितवृत्तित्वसामान्याभावविपक्षनिरूपितवृत्तित्वसामान्याभावद्योतकत्वमेव वक्तव्यम्। तथाच उभयाभावस्थले वृत्तित्वसामान्याभावाभावादेव न दोष इति मन्तव्यम्। एवमपि पर्वतो वह्निमान् धूमादित्यत्र धूमानामधिकरणभेदेन भिन्नतया पर्वतीयधूमस्य सर्वसपक्षेषु महानसादिषु सर्वविपक्षेषु ह्रदादिषु चावर्तमानतयाऽतिव्याप्तिः। तदर्थं सपक्षनिरूपितवृत्तितानवच्छेदकं विपक्षनिरूपितवृत्तितानवच्छेदकं यद्धेतुतावच्छेदकमिति विवक्षणान्न दोषः। पर्वतीयधूमस्य सपक्षमहानसाद्यवृत्तित्वेऽपि हेतुतावच्छेदकीभूतधूमत्वस्य तद्वृत्तितानवच्छेदकत्वाभावात्। असाधारणः सामानाधिकरण्यग्रहप्रतिबन्धकः। हेतुव्यापकसाध्यसामानाधिकरण्यस्य व्याप्तितया नित्यत्वासमानाधिकरणं शब्दत्वमिति असाधारण्यनिर्णयस्य तदभाववत्तानिश्चयविधया नित्यत्वसमानाधिकरणं शब्दत्वमिति व्याप्तिघटकसामानाधिकरण्यग्रहविघटकतया अनुमितिकरणप्रतिबन्धकत्वात् नित्यत्वासमानाधिकरणशब्दत्वरूपासाधारण्यस्य तादृशनिश्चयविषयत्वेन हेत्वाभासत्वोपपत्तिः। अत्रेदमवधेयम्—विपक्षव्यावृत्तत्वांशस्य प्रयोजनाभावात् सपक्षव्यावृत्तत्वमात्रमेव लघु लक्षणं भवितुमर्हति। विपक्षव्यावृत्तत्वाभावे विरुद्धहेतौ लक्षणस्यातिप्रसक्तिरिति न मन्तव्यम्। उपधेयसंकरेऽप्युपाधेरसंकर इति न्यायेन विरुद्धत्वासाधारणत्वयोरेकस्मिन् हेतौ संभवेऽपि विरोधासाधारण्यदोषयोः परस्परं भिन्नतया न संकरः। अत एव पुस्तकान्तरेषु सपक्षव्यावृत्तोऽसाधारणः इत्येव पाठः। परं तु शब्दोऽनित्यः, शब्दत्वादिति सद्धेतावपि प्राचीनमतेन साध्यसंशयकाले



असाधारण्यांगीकरणात् सपक्षविपक्षावृत्तिरूपं लक्षणं कृतम्। अनित्यत्वसाध्यकशब्दत्वहेतोः सद्धेतुत्वेन साध्यवदवृत्तित्वमात्रमेव नवीनैर्लक्षणतया स्वीकृतम्। एवं च नवीनमते सपक्षपदं साध्यवन्मात्रबोधकतया स्वीकृतमिति भाति। शब्दत्वं नित्यानित्यव्यावृत्तं चेत् तदधिकरणं कुत्र प्रसिद्धमित्याकांक्षायामाह—शब्दमात्रेति॥

**अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी। यथा सर्वमनित्यं प्रमेयत्वात्। अत्र सर्वस्यापि पक्षत्वात् दृष्टान्तो नास्ति।**

अनुपसंहारिणं लक्षयति—अन्वयव्यतिरेकेति। अनुपसंहारीत्यस्योपसंहारकभिन्नः इत्यर्थः। उपसंहारकत्वं च दृष्टान्तबलेन पक्षे साध्यस्य संपादकत्वम्। तथाच दृष्टान्तप्रयुक्तसाध्यानुमितिजनकत्वशून्योऽनुपसंहारीत्यर्थः। तत्र लाघवात् दृष्टान्तरहित इत्येवालम्। केवलान्वयिनि केवलव्यतिरेकिणि चातिव्याप्तिवारणाय दृष्टान्तसामान्यराहित्यं विवक्षणीयमिति दर्शयति—अन्वयेत्यादिना। दृष्टान्तः निश्चितस्थलम्। साध्यनिश्चयविशेष्य इति यावत्। अन्वयव्यतिरेकदृष्टान्ताभ्यां रहित इत्यत्र तृतीयायाः प्रतियोगितानिरूपकत्वम्, रहधातोरभावः, क्तप्रत्ययस्याश्रयत्वं चार्थः। तथाच अन्वयव्यतिरेकदृष्टान्तप्रतियोगिकाभाववाननुपसंहारीति बोधः। सर्वमनित्यं प्रमेयत्वादित्यत्र सर्वत्वावच्छिन्नस्य पक्षत्वेन पक्षव्यतिरिक्तस्यैवाप्रसिद्ध्या अन्वयव्यतिरेकदृष्टान्तयोरभावेन प्रमेयत्वहेतौ द्विविधदृष्टान्ताभावाल्लक्षणसमन्वयः। अत्र व्यतिरेकदृष्टान्तरहितत्वमात्रोक्तौ घटोऽभिधेयः, प्रमेयत्वादित्यत्र केवलान्वयिनि प्रमेयत्वहेतावतिव्याप्तिः। अन्वयदृष्टान्तरहितत्वमात्रोक्तौ पृथिवी इतरभिन्ना, गन्धवत्त्वादिति केवलव्यतिरेकिगन्धरूपहेतावतिव्याप्तिरिति उभयोपादानम्[1]। नचैवमपि धूमादिसद्धेतौ संयोगसमवायादिसंबन्धेनान्वयव्यतिरेकदृष्टान्तयोरसंभवादतिव्याप्तिरिति वाच्यम्। स्वनिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वसंबन्धावच्छिन्ना या अन्वयदृष्टान्तनिष्ठा प्रतियोगिता तन्निरूपकाभाववत्त्वे सति स्ववृत्त्यत्यन्ताभावप्रतियोगित्वसंबन्धावच्छिन्ना या व्यतिरेक-

---

१ नन्वेवमपि सर्वमभिधेयम्, ज्ञेयत्वादित्यत्र सद्धेतावतिव्याप्तिः। अत्रापि सर्वस्यापि पक्षत्वादिति चेत्, एतद्ग्रन्थकृन्मते अस्याप्यनुपसंहारित्वमेवेति ज्ञेयम्।

दृष्टान्तनिष्ठा प्रतियोगितां तन्निरूपकाभाववत्त्वस्य लक्षणत्वेन विवक्षणात् । वह्निमान् धूमादित्यत्र धूमे निरुक्तसंबन्धाभ्याम् अन्वयव्यतिरेकदृष्टान्तयोः सत्त्वेन नात्रातिव्याप्तिः । यद्वा अन्वयव्यतिरेकदृष्टान्तीयप्रतियोगिता समानकालिकत्वसंबन्धावच्छिन्ना ग्राह्या । अतो न क्वापि दोष इति समाधेयम् । नचैवं अन्वयव्यतिरेकदृष्टान्तरहितत्वस्य साधारणासाधारणयोरपि संभवादतिव्याप्तिः । तत्रान्वयव्यतिरेकव्याप्त्योरभावादिति वाच्यम् । अत्र अन्वयदृष्टान्तस्य पक्षभिन्नत्वे सति साध्यसाधनोभयाश्रयत्वस्य, व्यतिरेकदृष्टान्तस्य पक्षभिन्नत्वे सति साध्याभावहेत्वभावाश्रयत्वस्य च लक्षणत्वेन विवक्षणात् अन्वयव्यतिरेकव्याप्त्योः अत्राप्रविष्टत्वेन साधारणासाधारणयोः अन्वयव्यतिरेकदृष्टान्तयोरेकतरस्य सत्त्वेन अन्वयदृष्टान्तरहितत्वे सति व्यतिरेकदृष्टान्तरहितत्वस्यासंभवात् अन्वयव्यतिरेकव्याप्त्यभावेऽपि दोषानवकाशात् । अत्र दृष्टान्तद्वयरहितत्वं उपपादयति—सर्वस्येत्यादिना । संशयोत्पत्तिक्षणे निश्चयानुदयात् निश्चयं प्रति संशयसामग्री प्रतिबन्धिका इति वक्तव्यम् । एवं च अत्र अनुपसंहारिस्थले सर्वस्यापि पक्षत्वेन सर्वावच्छेदेन संशयसामग्रीसत्त्वात् न कुत्रापि साध्यनिश्चयसंभवः इति व्यापकसामानाधिकरण्यरूपव्याप्तिग्रहो न भवतीति अनुपसंहारिणः व्याप्तिज्ञानप्रतिबन्धकतया हेत्वाभासत्वम्, न तु साक्षादनुमितिप्रतिबन्धकज्ञानविषयत्वेनेति विज्ञेयम् । तथाच यद्धेतुकव्याप्तिग्रहानुकूलं सत् सहचारज्ञानम् अन्वयेन व्यतिरेकेण च यदवच्छिन्नाधिकरणान्तर्भावेन यदा नास्ति, तदा स हेतुरनुपसंहारीति सिद्धम् ॥

**साध्याभावव्याप्तो हेतुर्विरुद्धः । यथा शब्दो नित्यः कार्यत्वात् इति । अत्र कार्यत्वं नित्यत्वाभावेनानित्यत्वेन व्याप्तम् ।**

मणिकृद्दूषितमपीदं विरुद्धलक्षणं दोषोद्धारं मनसि कृत्वाऽऽरभते—साध्याभावेति । साध्याभावव्याप्तत्वस्य स्वसमानाधिकरणनिरवच्छिन्नात्यन्ताभावप्रतियोगितानवच्छेदकसाध्याभावत्वकत्वरूपतया मणिकृदुक्तसंयोगादिसाध्यकसद्धेतौ अतिव्याप्तेर्नावकाशः इति हृदयम् । अत एव गौतमसूत्रम् "सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः" इति । साध्यस्याभावः साध्याभावः । षष्ठ्याः प्रतियोगितानिरूपकत्वमर्थः । तत्र प्रकृत्यर्थस्याधेयतासंबन्धेनान्वयः । साध्याभावेन व्याप्तः इत्यत्र तृतीयायाः निरूपितत्वमर्थः । तस्य व्याप्तपदार्थैकदेशे व्याप्तावन्वयः । व्याप्तपदार्थस्य निपातातिरिक्तनामार्थयोरिति नियमेन विरुद्धपदार्थे अभेदेनान्वयः । तथाच साध्यनिष्ठप्रतियोगिताकाभावनिरूपितव्याप्तिविशिष्टाभिन्नो विरुद्ध इति बोधः । व्याप्तिश्चात्र व्यतिरेकव्याप्तिर्ग्राह्या । व्यतिरेकव्याप्तिश्च तदभावव्यापकीभूताभावप्रतियोगित्वम् । तच्छब्दस्य स्थाने साध्याभावस्य योजने साध्याभावाभावव्यापकीभूताभावप्रतियोगीति लब्धम् । व्यापकत्वं च तदधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वम् । साध्याभावाभावस्य साध्यरूपत्वेन साध्याधिकरणवृत्त्यत्यन्ताभावाप्रतियोग्यभावप्रतियोगित्वमिति विरुद्धलक्षणं फलितम् । शब्दो नित्यः, कार्यत्वादित्यत्र साध्यं नित्यत्वम् । तदधिकरणं गगनादि । तद्वृत्तिर्योऽत्यन्ताभावः, न कार्यत्वाभावाभावः, किन्तु कार्यत्वाभावः । तत्प्रतियोगि कार्यत्वम् । अप्रतियोगी योऽभावः कार्यत्वाभावः । तत्प्रतियोगित्वं कार्यत्वे इति समन्वयः । अत्र साध्यव्यापकत्वस्थाने साध्यसामानाधिकरण्यनिवेशे वह्निमान् धूमादिति सद्धेतौ अतिव्याप्तिः । वह्न्यधिकरणे अयोगोलके वर्तमानात्यन्ताभावः धूमाभावः । तत्प्रतियोगित्वं धूमे । व्यापकत्वनिवेशे तु साध्यव्यापकत्वस्य धूमाभावेऽसंभवान्नातिव्याप्तिः । धूमाभावस्य साध्याधिकरणमहानसादिवृत्त्यभावप्रतियोगित्वात् । नचैवमपि शब्दो नित्यः, शब्दत्वात् इत्यत्र शब्दत्वरूपासाधारणहेतोः नित्यत्वात्मकसाध्यव्यापकीभूतस्य शब्दत्वाभावस्य प्रतियोगित्वेन तत्रातिव्याप्तिरिति वाच्यम् । पूर्वोक्तसर्वसपक्षविपक्षव्यावृत्तत्वरूपासाधारण्यदोषस्य साध्यव्यापकीभूताभावप्रतियोगित्वरूपविरोधात् भिन्नतया असाधारणविरुद्धयोरैक्यसंभवेऽपि दुष्टसंकरेऽपि दोषासंकर इति न्यायादनुपपत्त्यभावात् । अत एव निश्चितसाध्यवद्व्यावृत्तत्वस्यासाधारणलक्षणस्य विरुद्धसाधारण्येऽपि न क्षतिः । कार्यत्ववान् शब्दः इति निश्चयविशिष्टस्य नित्यत्वव्यापकीभूताभावप्रतियोगि कार्यत्वमिति निश्चयस्य तदभावव्याप्यवत्ताज्ञानत्वेन शब्दो नित्य इत्याकारकानुमितिप्रतिबन्धकतया तादृशनिश्चयविषयीभूते नित्यत्वव्यापकीभूताभावप्रतियोगिकार्यत्वरूपविरुद्धस्य हेत्वाभासत्वमुपपद्यत इति ज्ञेयम् ।

यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्षः। यथा शब्दो नित्यः श्रावणत्वात्, शब्दत्ववत्; शब्दोऽनित्यः कार्यत्वात् घटवत् इति।

सत्प्रतिपक्षं लक्षयति—यस्येति। सन् प्रतिपक्षो यस्येति समासः। प्रतिपक्षपदस्य साध्याभावसाधकं हेत्वन्तरम् अर्थः। केनचित् भ्रान्तेन शब्दे नित्यत्वसाधनाय शब्दो नित्यः श्रावणत्वादिति श्रावणत्वहेतौ प्रयुक्ते, अभ्रान्तोऽन्यः श्रावणत्वहेतुना शब्दे नित्यत्वं साधयितुं न शक्यम् इति जानन् प्रतिपक्षिप्रयुक्तश्रावणत्वहेतौ दोषोद्भावनाय शब्दे नित्यत्वाभावसाधकं कार्यत्वरूपहेत्वन्तरं प्रयुङ्क्ते। तत्र प्रथमः श्रावणत्वहेतुः सत्प्रतिपक्षः। यस्य श्रावणत्वरूपहेतोः यत् नित्यत्वं साध्यत्वेनाभिमतं तदभावः नित्यत्वाभावः तत्साधकं हेत्वन्तरं विद्यते सः श्रावणत्वहेतुः सत्प्रतिपक्ष इति वाक्यार्थः। यत्तदोर्नित्यसंबन्धः इति नियमेन यत्तच्छब्दार्थयोरेकार्थबोधकतया तच्छब्देन यत्पदग्राह्यश्रावणत्वरूपहेतोरेव ग्रहणम्। एवंच साध्याभावव्याप्यप्रतिहेतुमत्पक्षः सत्प्रतिपक्ष इति फलितम्। इदं च दुष्टहेतुलक्षणम्। सत्प्रतिपक्षदोषलक्षणं तु साध्याभावव्याप्यवत्पक्षत्वम्। एवं चात्र अनित्यत्वव्याप्यकार्यत्ववान् शब्द इति निश्चयस्य 'शब्दो नित्य' इति अनुमितिं प्रति तदभावव्याप्यवत्तानिश्चयविधया प्रतिबन्धकत्वेन साध्याभावव्याप्यवत्पक्षरूपसत्प्रतिपक्षस्य तादृशनिश्चयविषयत्वेन हेत्वाभासत्वमुपपद्यत एवेति। इदं च नवीनमताभिप्रायेण। प्राचीनमते तु साध्याभावव्याप्यप्रतिहेतुमत्तापरामर्शकालिकसाध्यव्याप्यप्रकृतहेतुमत्तापरामर्शविषयत्वं सत्प्रतिपक्षत्वम्। प्रकृते साध्याभावव्याप्यप्रतिहेतुमत्तापरामर्शः अनित्यत्वव्याप्यकार्यत्ववान् शब्दः इति परामर्शः। तदानीन्तनः साध्यव्याप्यप्रकृतहेतुमत्तापरामर्शः नित्यत्वव्याप्यश्रावणत्ववान् शब्दः इत्याकारकः। तद्विषयत्वं श्रावणत्वरूपहेतौ इति समन्वयः। अत्र साध्यव्याप्यप्रकृतहेतुमत्तापरामर्शस्य साध्याभावानुमितिं प्रति साध्याभावव्याप्यप्रतिहेतुमत्तापरामर्शस्य साध्यानुमितिं प्रति च तदभावव्याप्यवत्तानिश्चयविधया परस्परं प्रतिबन्धकत्वात् परस्पराभावव्याप्यवत्तानिश्चयात् परस्परा-



नुमितिप्रतिबन्धः फलमिति मन्तव्यम्। अत एव "सोऽयं हेतुः उभौ पक्षौ प्रवर्तयन्नन्यतरस्य निर्णयाय न कल्पते" इति भाष्यम्।

असिद्धः त्रिविधः, आश्रयासिद्धः, स्वरूपासिद्धः, व्याप्यत्वासिद्धश्चेति। आश्रयासिद्धो यथा, गगनारविन्दं सुरभि अरविन्दत्वात्, सरोजारविन्दवत्। अत्र गगनारविन्दमाश्रयः। स च नास्त्येव।

क्रमप्राप्तमसिद्धं विभजते—असिद्ध इति। आश्रयासिद्ध्याद्यन्यतमत्वम् असिद्धसामान्यलक्षणम्। असिद्धत्वम् असिद्ध्याश्रयत्वम्। अभावाश्रयत्वमिति यावत्। अभावनिरूपिताश्रयत्वं च एकज्ञानविषयत्वसंबन्धेन। अभावश्च आश्रयस्वरूपव्याप्यत्वान्यतमप्रतियोगिकः। तत्र आश्रयासिद्धः आश्रयस्य प्रकृतहेत्वाश्रयस्य पक्षस्य असिद्ध्याश्रयः[1]। अत्र गगनारविन्दं पक्षः। सुरभित्वं साध्यम्। अरविन्दत्वं हेतुः। गगने अरविन्दम् इति व्युत्पत्त्या गगनवृत्तित्वविशिष्टारविन्दमिति लभ्यते। अत्र गगनवृत्तित्वस्य पक्षविशेषणतया पक्षतावच्छेदकत्वेन तद्विशिष्टपक्षस्याप्रसिद्ध्या गगनवृत्तित्वाभाववदरविन्दस्याश्रयासिद्धत्वं बोध्यम्। एवं च पक्षतावच्छेदकाभाववत्पक्षकत्वम् आश्रयासिद्धलक्षणम्। पक्षतावच्छेदकाभाववत्पक्षः गगनवृत्तित्वाभाववदरविन्दम्। तद्वत्त्वम् अरविन्दत्वरूपहेताविति समन्वयः। स च नास्त्येवेति। स च = पक्षः। नास्त्येव = अप्रसिद्ध एव। अरविन्दे गगनीयत्वस्याप्रसिद्धत्वादिति भावः। अत्र गगनवृत्तित्वाभाववदरविन्दम् इति निश्चयः पक्षतावच्छेदकविशिष्टपक्षज्ञानं विघटयन् गगनवृत्तित्वविशिष्टारविन्दं सुरभि इत्यनुमितेः कारणं परामर्शं प्रतिबध्नाति। अतः गगनवृत्तित्वाभाववदरविन्दरूपाश्रयासिद्धेः तादृशनिश्चयविषयतया हेत्वाभासत्वोपपत्तिरिति।

---

१ अत्रेदं बोध्यम्। असिद्धिदोषस्य परामर्शप्रतिबन्धकतया, न सिद्धिः परामर्शानुत्पत्तिः यस्मात् इत्यसिद्धिः तदाश्रयः असिद्धः इति व्याख्येयम्। अत एव "व्याप्तस्य पक्षधर्मतया प्रमितिः सिद्धिः। तदभावः असिद्धिः" इत्युदयनाचार्याः।

**स्वरूपासिद्धो यथा, शब्दो गुणः, चाक्षुषत्वात्, रूपवत् । अत्र चाक्षुषत्वं शब्दे नास्ति, शब्दस्य श्रावणत्वात् ।**

स्वरूपासिद्धमुदाहरति—स्वरूपासिद्ध इति । अत्र शब्दः पक्षः । गुणत्वं साध्यम् । चाक्षुषत्वं हेतुः । चाक्षुषत्वं चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वम् । श्रावणत्वं श्रवणेन्द्रियजन्यप्रत्यक्षविषयत्वम् । हेत्वभाववत्पक्षः, पक्षावृत्तित्वविशिष्टहेतुत्वं वा स्वरूपासिद्धिलक्षणम् । हेत्वभाववत्पक्षः चाक्षुषत्वाभाववच्छब्दः । तद्वत्त्वस्य चाक्षुषत्वहेतौ सत्त्वात्समन्वयः । अत्र चाक्षुषत्वाभाववान् शब्दः इति निर्णयः गुणत्वव्याप्यचाक्षुषत्ववानिति परामर्शीयहेतुवैशिष्ट्यांशे तदभाववत्ताज्ञानविधया विरोधीति तादृशनिश्चयविषयत्वस्य चाक्षुषत्वाभाववच्छब्दरूपस्वरूपासिद्धौ वर्तमानतया तस्य हेत्वाभासत्वोपपत्तिः ।

**सोपाधिको हेतुः व्याप्यत्वासिद्धः । साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वम् । साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम् साध्यव्यापकत्वम् । साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम् । यथा पर्वतो धूमवान्, वह्नेः इत्यत्र आर्द्रेन्धनसंयोग उपाधिः । यत्र धूमः तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकत्वम् । यत्र वह्निः तत्रार्द्रेन्धनसंयोगो नास्ति, अयोगोलके आर्द्रेन्धनसंयोगाभावात् इति साधनाव्यापकत्वम् । एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वात् आर्द्रेन्धनसंयोगः उपाधिः । सोपाधिकत्वात् वह्निमत्त्वं व्याप्यत्वासिद्धम् ।**

ननु उपाधेरप्यनुमितिप्रतिबन्धकत्वेन कथं पंच हेत्वाभासा इत्यत आह—सोपाधिक इति । व्याप्यत्वम् अव्यभिचरितत्वम् असिद्धं यत्रेति व्युत्पत्त्या व्याप्यत्वासिद्धपदस्य व्यभिचारीत्यर्थः । तथाच उपाधिना स्वव्यभिचारिणि हेतौ साध्यव्यभिचारस्यैवोन्नयनात् व्यभिचारस्यैव तत्र दोषत्वेन परमुखनिरीक्षकत्वेनोपाधेर्न हेत्वाभासत्वमिति भावः । उपाधिविशिष्टत्वं



व्याप्यत्वासिद्धस्य लक्षणम् । उपाधिवैशिष्ट्यं च हेतौ स्वाभाववद्वृत्तित्वसंबन्धेन । यद्वैशिष्ट्यं यत्र भासते स एव स्वपदार्थः । हेतौ उपाधिवैशिष्ट्यस्य भाने उपाधिरेव स्वपदग्राह्यः । तथाच धूमवान् वह्नेः इत्यत्र आर्द्रेन्धनसंयोगरूपोपाधेः स्वपदेन ग्रहणात् स्वाभावः आर्द्रेन्धनसंयोगाभावः । तद्वदयोगोलकम् । तद्वृत्तित्वस्य वह्नौ सत्त्वेन स्वाभाववद्वृत्तित्वसंबन्धेन वह्नौ उपाधिविशिष्टत्वमिति सः वह्निरूपहेतुर्व्याप्यत्वासिद्धः । उपाधिघटकव्यापकत्वव्याप्यत्वनिर्वचनपूर्वकमुपाधिलक्षणं परिष्करोति साध्यसमानेत्यादिना । तथाच साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वे सति साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वम् उपाधेर्लक्षणम् । धूमवान् वह्नेरित्यत्र आर्द्रेन्धनसंयोग उपाधिः । अत्र साध्यः धूमः । तदधिकरणं महानसादिः । तद्वृत्तिर्योऽत्यन्ताभावः, न आर्द्रेन्धनसंयोगाभावः, किन्तु घटाद्यभावः । तत्प्रतियोगित्वं घटे । अप्रतियोगित्वमार्द्रेन्धनसंयोगे इति साध्यव्यापकता । तथा साधनं वह्निः । साधनवत् अयोगोलकम् । तद्वृत्तिः यः अत्यन्ताभावः आर्द्रेन्धनसंयोगाभावः तत्प्रतियोगित्वमार्द्रेन्धनसंयोगे इति साधनाव्यापकता । एवं च आर्द्रेन्धनसंयोगे दलद्वयस्य सत्त्वाल्लक्षणसमन्वयः । विशेष्यमात्रोक्तौ पर्वतो वह्निमान्, धूमादित्यत्र रासभादेरपि साधनाधिकरणमहानसादिनिष्ठाभावप्रतियोगित्वात् तत्रातिव्याप्तिः । साध्यव्यापकत्वनिवेशे तु रासभादेः साध्याधिकरणमहानसादिनिष्ठात्यन्ताभावप्रतियोगितया साध्यव्यापकत्वाभावान्नातिव्याप्तिः । विशेषणमात्रोपादाने स्वस्य स्वव्यापकतया पर्वतो वह्निमान्, धूमादित्यत्र वह्निरूपसाध्येऽतिव्याप्तिः । विशेष्यनिवेशे तु वह्नेः साधनधूमं प्रत्यपि व्यापकत्वात् साधनाव्यापकत्वं नास्तीति नातिव्याप्तिः । अतः दलद्वयनिवेशनम् । नन्वेवमपि पर्वतो धूमवान् वह्नेरित्यत्र धूमाधिकरणे आर्द्रेन्धनसंयोगघटत्वोभयाभावसत्त्वात् तत्प्रतियोगित्वमार्द्रेन्धनसंयोगस्येत्युभयाभावमादाय सर्वत्रासंभव इति चेत्, न; साध्याधिकरणे वर्तमानाभावप्रतियोगितायां व्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य निवेशनीयत्वात् । सर्वत्रोभयाद्यभावप्रतियोगिता व्यासज्यवृत्त्युभयत्वाद्यवच्छिन्ना । अतः आर्द्रेन्धनसंयोगघटत्वोभयाभावप्रतियोगिनामादाय न दोषः । व्यासज्यवृत्तित्वं च एकत्वानवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वम् । स्वाधिकरणे पर्याप्ति-

संबन्धेन एकत्वावच्छेदेन अवर्तमानत्वं तदर्थः। द्व्यत्रयादिषु उभयत्व-त्रयत्वाद्यवच्छेदेन पर्याप्तिसंबन्धेन वर्तमानाः व्यासज्यवृत्तिधर्माः द्वित्वत्रित्वादयः विज्ञेयाः। नचैवमपि धूमाधिकरणे महानसादौ वर्तमानस्य पूर्वक्षणादिवृत्तित्वविशिष्टार्द्रेन्धनसंयोगाभावस्यार्द्रेन्धनसंयोगः प्रतियोगीति पुनरपि दोष इति वाच्यम्। पूर्वोक्तरीत्या प्रतियोगितायां व्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्येव वैशिष्ट्यानवच्छिन्नत्वस्यापि विवक्षणात्। पूर्वक्षणवृत्तित्वविशिष्टार्द्रेन्धनसंयोगत्वावच्छिन्नप्रतियोगितायाः वैशिष्ट्यार्द्रेन्धनसंयोगत्वस्वरूपोभयधर्मावच्छिन्नतया वैशिष्ट्यानवच्छिन्नत्वाभावात्तां प्रतियोगितामादाय न दोष इति विभावनीयम्। एवं साधनवन्निष्ठाभावीयप्रतियोगितायामपि वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वं निवेशनीयम्। नो चेत् वह्निमान् धूमादित्यादिसद्धेतुस्थले वह्निरूपसाध्येऽतिव्याप्तिः। तत्र वह्नेः स्वव्यापकतया साध्यव्यापकत्वे सिद्धे तस्य महानसादिसाधनाधिकरणनिष्ठपूर्वक्षणवृत्तित्वविशिष्ट वह्न्यभावं प्रति वह्निघटत्वोभयाभावं प्रति च प्रतियोगित्वेन साधनाव्यापकत्वस्यापि सिद्धेः। तन्निवेशे तु विशिष्टवह्न्यभावस्य उभयाभावस्य च प्रतियोगिता क्रमेण वैशिष्ट्यावच्छिन्ना व्यासज्यवृत्तिधर्मोभयत्वावच्छिन्ना चेति तदनवच्छिन्नत्वाभावात् नातिप्रसंगः। साध्याभाववदवृत्तित्वाभाववद्धेतुः व्याप्यत्वासिद्धः। धूमाभाववदवृत्तिर्वह्निमान् इति परामर्शे धूमाभाववदवृत्तिः वह्निः इति व्याप्यंशे धूमाभाववदवृत्तित्वाभाववान् वह्निः इति निश्चयस्य प्रतिबन्धकत्वेन धूमाभाववदवृत्तित्वाभाववद्वह्निरूपव्याप्यत्वासिद्धेः तादृशनिश्चयविषयत्वेन हेत्वाभासत्वम्। अत्र साध्याभाववदवृत्तित्वाभावस्य साध्याभाववद्वृत्तित्वरूपतया व्यभिचार एवायमन्तर्भवतीति न मन्तव्यम्। दोषयोरैक्येऽपि दोषतावच्छेदकयोः साध्याभाववदवृत्तित्वाभावत्वसाध्याभाववदवृत्तित्वयोः भेदात्। दोषदोषतावच्छेदकोभयैक्य एव पृथक् गणनं न युक्तमिति मन्तव्यम्। साध्याप्रसिद्धिसाधनाप्रसिद्ध्यादीनां व्याप्यत्वासिद्ध एवान्तर्भावः। साध्ये साध्यतावच्छेदकाभावः साध्याप्रसिद्धिः। पर्वतः कांचनमयवह्निमान् इत्यादौ वह्नौ कांचनमयत्वं नास्ति इत्यनुमितिप्रतिबन्धकत्वम्। एवं कांचनमयधूमवान् इत्यादौ धूमे कांचनमयत्वं नास्तीति व्याप्तिप्रतिबन्धकत्वम् इत्यादि दीपिकाप्रकाशादौ द्रष्टव्यमिति दिक्।



**यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः। यथा वह्निरनुष्णः, पदार्थत्वात्, जलवत्। अत्र अनुष्णत्वं साध्यम्। तदभावः उष्णत्वं त्वाचप्रत्यक्षेण गृह्यत इति बोध्यम्।**

इति सर्वतन्त्रस्वतन्त्रान्नंभट्टविरचिते तर्कसंग्रहे अनुमानपरिच्छेदः।

बाधितस्य लक्षणमाह—यस्येति। यद्धेतुकसाध्याभावः पक्षे प्रत्यक्षादिना निश्चितः स हेतुः बाधितः। तथाच साध्याभाववत्पक्षकत्वं बाधितलक्षणम्। अत्र यस्य=पदार्थत्वरूपहेतोः यत् साध्यं साध्यत्वेनाभिमतमनुष्णत्वम्, तदभावः=अनुष्णत्वाभावः उष्णत्वम्, प्रमाणान्तरेण=त्वाचप्रत्यक्षकरणत्वगिन्द्रियेण, निश्चितः = निर्धारितः सः=पदार्थत्वरूपहेतुः, बाधितः इति वाक्यार्थः। अनुष्णत्वाभाववान् वह्निरिति बाधनिश्चयस्य वह्निरनुष्णः इत्यनुमितिं प्रति तदभाववत्तानिर्णयविधया प्रतिबन्धकत्वेन तादृशनिश्चयविषयानुष्णत्वाभाववद्वह्नौ हेत्वाभासत्वम् उपपन्नम्। पक्षावृत्तिसाध्यसाध्यानधिकरणपक्षपक्षवृत्तिसाध्याभावप्रभृतीनां पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धकत्वेन विशेषणविशेष्यभावव्यत्ययेऽपि बाध एवान्तर्भावः। एवं व्यभिचारादिसर्वहेत्वाभासेषु विशेषणविशेष्यभाववैपरीत्येन प्राप्तरूपान्तराणामपि यथायथं तेषु तेष्वेवान्तर्भावः। एवमेव बाधसत्प्रतिपक्षभिन्नानां तत्तद्धेत्वाभासव्याप्यानां तत्तद्धेत्वाभासेष्वन्तर्भावः कार्यः। यथा साध्याभाववद्वृत्तित्वविशिष्टहेतोर्व्यभिचारित्वे साध्याभाववद्वृत्तिव्याप्यहेतुरपि व्यभिचार्येव। हेत्वभाववत्पक्ष इव हेत्वभावव्याप्यवत्पक्षोऽपि स्वरूपासिद्धिरेव। एवमन्यत्रापि व्याप्यानां दोषत्वमूह्यम्। बाधव्याप्यस्य तु सत्प्रतिपक्षरूपतया न बाधे अन्तर्भावः। सत्प्रतिपक्षव्याप्यस्य ह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यव्याप्यवद्ध्रदादेः अनुमितितत्करणान्यतरप्रतिबन्धकज्ञानविषयत्वाभावेन न हेत्वाभासत्वम्। एवं चेत् अनुमितितत्करणप्रतिबन्धकत्वेन द्विधा विभाग एवोचितः, बाधविरुद्धसत्प्रतिपक्षाणाम्

अनुमितिप्रतिबन्धकतया, अन्येषां च अनुमितिकरणविरोधितयैक्यात् इति न विचारणीयम्, स्वतन्त्रेच्छस्य मुनेः नियोगपर्यनुयोगानर्हत्वात् इति शिवम्।

इति श्रीगर्भपुरीनिवासिनः भामतीदीपिकासांख्यतत्त्वकौमुदीदशोपनिषदादीनां व्याख्याकरणप्रकटितसर्वतोमुखवैदुष्यालंकृतानां श्रीसुब्रह्मण्यशास्त्रिवर्याणाम् आत्मजस्य रामशर्मणः कृतौ तर्कसंग्रहव्याख्यायां शक्तिसंजीविन्याख्यायाम् अनुमानपरिच्छेदः।

लोके दुर्भेतपर्वतप्रबलसंबाधापहत्यै तु ये
विद्वांसः कुलिशायुधं ह्यनुमितिं संपाद्य जित्वा रिपून्।
कल्याणायतनस्य कल्मपहृतः कारुण्यवारांनिधेः
विश्वेशस्य सुखस्थितिं च विविदुस्तेभ्यो महद्भ्यो नमः॥

शिवम्।

इति अनुमानपरिच्छेदः।

---

## अथ उपमानपरिच्छेदः।

उपमितिकरणम् उपमानम्। संज्ञासंज्ञिसंबन्धज्ञानम् उपमितिः। तत्करणं सादृश्यज्ञानम्। अतिदेशवाक्यार्थस्मरणं व्यापारः।

। नमः शिवकुमाराय।

अथ उपमानपरिच्छेदः।

रामो दयालुर्गुणराशिरेको
यस्योपमेयोऽप्युपमा न यस्य।
तं शक्तिहेतिं शरणं प्रपद्ये
वल्लीन्द्रजानायकमर्थसिद्ध्यै॥

अवसरप्राप्तं उपमानप्रमाणं निरूपयति—उपमितिकरणमिति। "संबन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह। प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः॥" इत्युदयनाचार्यैः उपमानस्य प्रमाणान्तरत्वं व्यवस्थापितं कुसुमाञ्जलौ। तत्र परिच्छेदपदस्य निश्चयज्ञानमर्थः। उपमितिनिरूपितकरण-



त्वमुपमानस्य लक्षणम्। उपमितिनिरूपितकरणत्वं च उपमितित्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वे सति उपमितिजनकव्यापारजनकत्वम्। उपमितित्वावच्छिन्ना कार्यता 'अयं गवयपदवाच्यः' इत्याकारकगवयत्वावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकोपमितौ वर्तमाना कार्यता। तन्निरूपिता कारणता 'गोसदृशो गवयपदवाच्यः' इत्याकारकगोसदृशत्वावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकज्ञानात्मकोपमाननिष्ठा कारणता। तदाश्रयत्वस्य 'गोसदृशो गवयपदवाच्यः' इत्याकारकातिदेशवाक्यार्थविषयकस्मरणरूपव्यापारजनकत्वस्य च गोसदृशो गवयपदवाच्यः इत्याकारकातिदेशवाक्यार्थज्ञानरूपोपमाने सत्त्वाल्लक्षणसमन्वयः। 'गवयः गवयपदवाच्यः' इति ज्ञानमुपमितिः। 'गोसदृशो गवयपदवाच्यः' इत्यतिदेशवाक्यार्थस्मरणं व्यापारः। 'गोसदृशो गवयपदवाच्यः' इत्यतिदेशवाक्यार्थज्ञानमुपमानम्[1]। विशेष्यमात्रोक्तौ ईश्वरादृष्टादौ, विशेषणमात्रोक्तौ व्यापारे चातिव्याप्तिरिति दलद्वयम्। प्रतिबन्धकवशात् यत्रोपमानोत्पत्त्यनन्तरम् उपमितिर्न जाता तत्रोपमितिकरणत्वं नास्तीति यद्यपि प्राप्ता अव्याप्तिः, तथापि फलोपधायकत्वाभावेऽपि फलस्वरूपयोग्यत्वरूपकारणत्वमव्याहतमिति सा समाधेया। फलोपधायकत्वं च स्वजनकत्वस्वसामानाधिकरण्योभयसंबन्धेन फलविशिष्टत्वम्। फलस्वरूपयोग्यतारूपकारणत्वं च फलजनकतावच्छेदकधर्मवत्त्वम्। उदाहृताचार्यकारिकार्थमेवार्थतोऽनुवदन् उपमितिलक्षणमाह—संज्ञेति। संज्ञा=वाचकशब्दः। संज्ञी=वाच्यार्थः। संज्ञासंज्ञिनोः संबन्धः=वाच्यवाचकरूपः। तस्य ज्ञानम्। तथाच पदवाच्यत्वप्रकारकज्ञानविशेषः उपमितिशब्दवाच्यः इति भावः। अनेन तुल्यत्वज्ञानरूपोपमितिः प्रकृते न विवक्ष्यत इति सूचितम्। संज्ञासंज्ञिसंबन्धस्य ज्ञानमित्यत्र षष्ठ्याः विषयतानिरूपकत्वमर्थः। तथाच पदपदार्थसंबन्धविषयकत्वे सति ज्ञानत्व-

---

१ इदं च सांप्रदायिकमतानुसारेण। नव्यास्तु—सादृश्यप्रत्यक्षं करणम्। अतिदेशवाक्यार्थस्मरणं व्यापारः इत्याहुः। "गोसदृशं पिण्डं पश्यति। तदनन्तरमयं गवयपदवाच्य इत्युपमितिरुत्पद्यते" इति वदतः अन्नंभट्टस्य नव्यमतमेव अभिमतमिति बोध्यम्।

मुपमितेर्लक्षणम्। अयं गवयपदवाच्य इत्युपमितौ पदपदार्थसंबन्धरूपवाच्यत्वविषयकत्वस्य ज्ञानत्वस्य च सत्त्वात्समन्वयः। ज्ञानत्वमात्रोक्तौ अनुमित्यादौ, पदपदार्थसंबन्धविषयकत्वमात्रोक्तौ अयं गवयपदवाच्यः इति संस्कारे चातिव्याप्तिः इत्युभयोपादानम्। केचित् सादृश्यविशिष्टपिण्डदर्शनं करणमिति, अपरे अतिदेशवाक्यार्थशाब्दबोधः करणमिति, अन्ये तु अतिदेशवाक्यार्थस्मरणम् अव्यवहित पूर्ववृत्तितया करणमिति चाहुः। तत्सर्वसाधारण्यायाह—सादृश्यज्ञानमिति।

तथाहि—कश्चित् गवयपदार्थमजानन् कुतश्चिदारण्यकपुरुषात् 'गोसदृशो गवयः' इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति। तदनन्तरम् 'अयं गवयपदवाच्यः' इति उपमितिरुत्पद्यते।

इति श्रीमदन्नंभट्टविरचिततर्कसंग्रहे उपमानपरिच्छेदः।

उपपादयति—तथाहीति। कश्चित् = ग्रामीणः। कुतश्चित् = कस्मादपि। आरण्यकपुरुषविशेषणमिदम्। गोसदृशो गवय इति श्रुत्वेत्यनेन उपमानं दर्शितम्। वाक्यार्थं स्मरन् इत्यनेन स्मृत्यात्मकव्यापारः सूचितः। अयं गवयपदवाच्य इत्यनेन उपमितिस्वरूपं च दर्शितम्। इत्युपमितिरुत्पद्यत इति। गवयविशेष्यकगवयपदवाच्यत्वप्रकारक ज्ञानरूपोपमितिरुत्पद्यत इत्यर्थः। वैधर्म्योपमितिमपि अङ्गीकुर्वन्ति टीकाकृतः। यथा अतिदीर्घकण्ठत्वादिपश्वन्तरवैधर्म्यज्ञानात् उष्ट्रे करभपदवाच्यत्वग्रहो भवति इति। अत्र "अन्यदप्युपमानम्" इति भाष्यम्। अन्यदपि= शक्तिपरिच्छित्तिभिन्नपरिच्छित्तिरपि, उपमानम् = उपमितिः इत्यर्थात् कार्यकारणभावपरिच्छित्तिरूपाप्युपमितिः। तथाहि—'मुद्गपर्णीसदृशौषधिः ज्वरहरेति वैद्यस्य वाक्यं श्रुत्वा तदर्थबोधानन्तरं मुद्गपर्णीसादृश्यविशिष्टौषधिदर्शनेन मुद्गपर्णीसादृश्यविशिष्टविशेष्यकज्वरहरत्वप्रकारकातिदेशवाक्यार्थस्मरणानन्तरम् 'इ' ज्वरहरा'इत्याकारककार्यकारणभावपरिच्छेदात्म-



कोपमितिमङ्गीकुर्वन्ति दीधितिकाराः[1]। तन्मते संज्ञासंज्ञिसंबन्धज्ञानत्वस्य लक्षणत्वेन वक्तुमशक्यतया उपमितित्वजातिमत्त्वमेव लक्षणं बोध्यम्।

उपमानपरिच्छेदः शक्तिहस्ताम्बुजस्य हि।
यस्य कारुण्यतः पूर्णो नमस्तस्मै शिवात्मने ॥

इति श्रीगर्भपुरीनिवासिनः सर्वदर्शनप्रवीणतर्कवेदान्तपारंगतव्याकरणगणितादितत्त्वज्ञवैदिकधर्मैकशरणश्रीसुब्रह्मण्यशास्त्रिवर्याणाम् आत्मजस्य रामशर्मणः कृतौ तर्कसंग्रहव्याख्यायां शक्तिसंजीविन्याख्यायाम् उपमानपरिच्छेदः

शिवम्।

---

## अथ शब्दपरिच्छेदः।

आप्तवाक्यं शब्दः

अथ शब्दपरिच्छेदः

नमः शिवकुमाराय।

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।
सर्ववेदान्तसिद्धान्तसारं तं स्कन्दमाश्रये ॥

अत्रादौ किं शब्दप्रमाणमिति जिज्ञासायां ...निवर्णकेवलपदादयस्तत् न भवितुमर्हन्ति, तेषां शाब्दबोधजनकत्वाभावात्। नाप्यनाप्तवाक्यम्, तस्य शाब्दप्रमाजनकत्वासंभवादिति मनसि कृत्वा "आप्तोपदेशः शब्दः" इति सूत्रमर्थतोऽनुवदन् शब्दप्रमाणलक्षणमाह— आप्तवाक्यमिति। शब्द इति लक्ष्यनिर्देशः। प्रमाणशब्द इति तदर्थः। आप्तवाक्यमिति लक्षणम्। आप्तस्य वाक्यम् आप्तवाक्यम्। षष्ठ्यर्थसंबन्धः प्रयुक्तत्वरूपः। तथा च आप्तप्रयुक्तत्वे सति वाक्यत्वं शब्द-

1. शक्तिपरिच्छेदस्थले गवयत्वावच्छेदेन गवयपदवाच्यत्वावगाहित्वमुपमितेः इति वदन्तोऽपि दीधितिकृतः कार्यकारणभावपरिच्छेदस्थले तस्या इदंत्वावच्छेदेनैव ज्वरहरत्वावगाहित्वमङ्गीकुर्वन्ति, न तु मुद्गपर्णीसादृश्यावच्छेदेन। तादृशकार्यकारणभावस्य वैद्यवाक्यादेवावगतत्वादिति बोध्यम्।

प्रमाणस्य लक्षणम्। गामानयेत्यादिप्रमाणवाक्येषु आप्तप्रयुक्तत्वस्य वाक्यत्वस्य च सत्त्वात्समन्वयः। विशेष्यमात्रोक्तौ अनाप्तोच्चरितवाक्येऽतिव्याप्तिः। विशेषणमात्रोक्तौ हयवरडादौ अतिव्याप्तिरिति उभयोपादानम्। अत्र प्रमाणशब्दत्वं लक्ष्यतावच्छेदकम्। शब्दत्वमात्रस्य तथात्वे वह्निना सिंचतीत्यप्रमाणवाक्यस्यापि लक्ष्यतया तत्रोक्तलक्षणासत्त्वादव्याप्तिः। प्रमाणशब्दत्वस्य लक्ष्यतावच्छेदकत्वे निरुक्तवाक्यस्यालक्ष्यतया नोक्तदोषः। नन्वेवमपि यथार्थज्ञानजनकशब्दप्रयोगकर्त्रा प्रथमं महानसो वह्निमानिति उक्त्वा तदनन्तरं ह्रदो वह्निमानित्युक्ते तत्राप्तोच्चरितत्ववाक्यत्वयोः सत्त्वादतिव्याप्तिरिति चेत्, न; अत्र प्रकृतप्रयोगहेतुभूतयथार्थज्ञानवत्प्रयुक्तवाक्यत्वस्य विवक्षणात्। ह्रदो वह्निमानिति वाक्यं प्रति भ्रमज्ञानस्यैव कारणत्वात् यथार्थज्ञानजन्यत्ववाक्यत्वयोरभावान्नातिव्याप्तिः। इदमापाततः। वस्तुतस्तु शब्दप्रमाणं शब्दज्ञानमेव न तु शब्दः। शब्दस्यैव करणत्वे मौनिश्लोकादीनां शाब्दबोधजनकत्वानुपपत्तिः, कण्ठताल्वाद्यभिघातसंयोगजन्यध्वनिविशेषरूपस्य शब्दस्य तदानीमभावात्। शब्दज्ञानस्य करणत्वस्वीकारे तु लिप्यादिजन्यपदज्ञानस्य तदानीं सत्त्वान्नानुपपत्तिः।

**आप्तस्तु यथार्थवक्ता।**

केवलमित्रे वा यथार्थज्ञानयुक्ते वा नात्राप्तशब्दः प्रयुक्तः। विप्रलम्भेच्छया तदुक्तिः अयथार्थापि स्यादिति तदर्थं विगदयति—आप्तस्त्विति। यथाभूतोऽर्थः यथार्थः 'मिथः संबन्धयुक्ततया अबाधितः'। तस्य वक्ता ज्ञानानुकूलशब्दप्रयोगाश्रयः। षष्ठ्यर्थः विषयतानिरूपकत्वम्। तथाच अबाधितार्थविषयकज्ञानजनकशब्दप्रयोगाश्रयः इति बोधः। महानसो वह्निमानिति शब्दप्रयोक्तरि यथार्थविषयकज्ञानजनकशब्दप्रयोक्तृत्वसत्त्वात्समन्वयः। न च महानसो वह्निमानिति पूर्वकालावच्छेदेन शब्दप्रयोक्तरि ह्रदो वह्निमानिति तदानीं वक्तर्यनाप्ते अतिव्याप्तिः, तस्यापि पूर्वं यथार्थज्ञानजनकशब्दप्रयोक्तृत्वादिति वाच्यम्। यस्मिन् काले यथार्थवक्तृत्वं तदानीमेव आप्तत्वात्। प्रकृतशब्दप्रयोगकाले अयथार्थवक्तर्यनाप्तत्वमेवेति न दोषः।



**वाक्यं तु पदसमूहः। यथा गामानयेति।**

आप्तलक्षणघटकं वाक्यं निर्वक्ति—वाक्यं त्विति। पदसमूहमुदाहरति—यथेति। गोपद—द्वितीयाविभक्ति—आङ्पूर्वकनीधातु—लोट्प्रत्ययरूपपदसमुदायरूपत्वादस्य वाक्यत्वमिति भावः। अत्र तार्किकमते शक्तं पदमिति शक्तपदसमूह एव वाक्यम्। वैयाकरणास्तु परस्परान्वयिभावापन्नक्रियाकारकवाचकपदसमुदायः वाक्यमिति वदन्ति। तार्किकाणां पदसमूहमात्रस्य वाक्यत्वेन क्रियापदसमभिव्याहारनियमाभावात् 'नीलो घटः' इत्यादिक्रियाप्रयोगविरहस्थलेऽपि वाक्यत्वमभिमतम्। क्रियां विना वाक्यपरिसमाप्तिर्नास्ति इति वैयाकरणाः। अतः 'नीलो घटः' इत्यादिस्थले क्रियाध्याहारः क्रियते तैः।

**शक्तं पदम्। अस्मात्पदादयमर्थो बोद्धव्य इति ईश्वरसंकेतः शक्तिः।**

वाक्यं तु पदसमूह इत्युक्ते तद्घटकपदं किं सुप्तिङन्तमिति परिभाषितम्? उत पचते गम्यते अर्थः अनेनेति व्युत्पत्त्या सिद्धम्? इत्याकांक्षायामाह—शक्तमिति। शक्तिनिरूपकत्वं लक्षणम्। तार्किकाणां मते यौगिकार्थाङ्गीकारात् केवलविभक्तीनाम्, कृदादिप्रत्ययानाम्, प्रकृतीनां च पदत्वं निर्विवादम्। सुप्तिङन्तं पदमिति वदन्तः वैयाकरणाः प्रकृतिप्रत्ययसमुदायस्यैव पदत्वमभ्युपगच्छन्ति। तेषां मते 'शिवः' 'रक्षति' इत्यादीनामेव पदत्वम्। नैयायिकमते तु शिवेतिप्रकृतिरेकं पदम्। सुप्रत्ययः पदान्तरम्। रक्षेति प्रकृतिरेकं पदम्। तिप्रत्ययः पदान्तरमिति विवेकः। शक्तं पदमित्येतत् लाक्षणिकपदस्याप्युपलक्षणम्। अतः पदं द्विविधं शक्तं लाक्षणिकं चेति। शक्त्या अर्थबोधकं शक्तम्। लक्षणया अर्थबोधकं लाक्षणिकम्। एवमर्थोऽपि द्विविधः शक्यो लक्ष्यश्चेति। शक्त्या बोध्यः शक्यः। लक्षणया बोध्यो लक्ष्यः। वृत्तिरपि द्विविधा शक्तिर्लक्षणा चेति। तत्र शक्तिमुदाहरति—अस्मात्पदादिति। ईश्वरसंकेतः = ईश्वरेच्छा। एतत्पदजन्यबोधविषयत्वप्रकारिकायाः एतदर्थविशेष्यकेश्वरेच्छायाः आकारः अनेन वाक्येन प्रदर्शितः। तथाचार्थस्यैतादृशशक्तौ विशेष्यतया

शक्तिनिरूपितमुख्यविशेष्यताश्रयत्वं शक्यत्वमिति फलितम्। शक्तौ परंपरया पदस्य प्रकारत्वेन शक्तिनिरूपितपरम्पराप्रकारत्वं शक्तत्वम्। शक्तिनिरूपितपरम्पराप्रकारत्वं नाम शक्तिनिरूपितमुख्यविशेष्यतानिरूपितप्रकारतानिरूपितप्रकारतानिरूपितप्रकारतानिरूपितप्रकारताश्रयत्वम्। एतत्पदजन्यबोधविषयोऽयमर्थो भवतु इतीश्वरेच्छायाः शक्तिरूपतया शक्तिनिरूपिता मुख्यविशेष्यता अर्थनिष्ठा। तन्निरूपिता प्रकारता विषयत्वनिष्ठा। तन्निरूपिता प्रकारता बोधनिष्ठा। तन्निरूपिता प्रकारता जन्यत्वनिष्ठा। तन्निरूपिता प्रकारता पदनिष्ठा। तदाश्रयत्वं पदे। अत्र विशेष्यतायां मुख्यत्वानिवेशे बोधांशे विषयत्वस्यापि विशेष्यतया शक्तिनिरूपितविशेष्यतापदेन विषयत्वनिष्ठविशेष्यतायाः परिग्रहे तन्निरूपितनिरुक्तप्रकारताश्रयत्वस्य तत्तत्पदत्वरूपानुपूर्व्यां सत्त्वात् तत्रापि तदर्थशक्तताव्यवहारप्रसंगः। विशेष्यतायां मुख्यत्वनिवेशे तु विषयत्वनिष्ठा विशेष्यता न मुख्या भवतीति नातिप्रसंगः। अत्र शक्तिज्ञानजन्यशाब्दबोधसामग्री त्वेवम्—प्रथमं पदज्ञानम्। तदनु शक्तिज्ञानम्। उभाभ्यां पदजन्यपदार्थोपस्थितिः। तदनु शाब्दबोधः। यथा 'कुमारमानयति' इत्यत्र प्रथमं कुमारपदज्ञानम्। तदनु अम्पदज्ञानम्। तदन्वाङ्पूर्वकनीधातुज्ञानम्। तदन्वाख्यातज्ञानम्। इदं पदज्ञानमित्युच्यते। तदनु कुमारपदस्य कुमारे शक्तिः, अम्पदस्य कर्मत्वे शक्तिः, आङ्पूर्वकनयतेः आनयने शक्तिः, आख्यातस्य कृतौ शक्तिरिति ज्ञानं शक्तिज्ञानम्। तदनु कुमारपदात् कुमारोपस्थितिः। अम्पदात् कर्मत्वोपस्थितिः। आङ्पूर्वकनीधातोः आनयनोपस्थितिः। आख्यातात् कृतेरुपस्थितिः। तदन्वाकांक्षायोग्यतासन्निधितात्पर्यज्ञानादिसामग्रीबलात् कुमारकर्मकानयनानुकूलकृतिमान् मयूरः इत्याकारकः कुमारकर्मकानयनानुकूलकृतिप्रकारकः मयूरविशेष्यकः बोधो जायते।

अथ लक्षणा निरूप्यते। शक्यसंबन्धो लक्षणा। स च संबन्धः क्वचित् साक्षात्। क्वचित्परंपरया। यथा 'गङ्गायां घोषः' इत्यत्र गङ्गापदशक्यप्रवाहस्य संयोगरूपसाक्षात्संबन्धस्य तीरे वर्तमानतया गङ्गापदात् तीरबोधे साक्षात्संबन्धः प्रयोजकः। 'मञ्चाः क्रोशन्ति', 'यष्टीः



प्रवेशय', इत्यादिस्थलेष्वपि स्वशक्यमञ्चयष्ट्यादिसंयोगरूपसाक्षात्संबन्धः पुरुषबोधोपयोगी। 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र काकपदशक्यकाकानां स्वनिष्ठदध्युपघातकत्वाश्रयत्वरूपपरंपरासंबन्धः दध्युपघातके दध्युपघातकत्वावच्छिन्नबोधोपयोगी। एवं द्विरेफपदशक्यरेफद्वयस्य स्वघटितपदवाच्यत्वरूपपरंपरासंबन्धः द्विरेफपदात् भ्रमरबोधे समुपयुज्यते। एवं रीत्या स्थलान्तरेष्वपि साक्षात्परंपरासंबन्धानां लक्षणात्वं ज्ञेयम्। सा लक्षणा पुनर्द्विविधा निरूढलक्षणा स्वारसिकलक्षणा चेति। अनादितात्पर्यविषयीभूता निरूढलक्षणा। यत्र पदश्रवणानन्तरम् अविलम्बेनैव यया लक्षणया पदार्थोपस्थितिर्जायते सा निरूढलक्षणेत्यर्थः। यथा 'गङ्गायां घोषः', 'मञ्चाः क्रोशन्ति', 'काकेभ्यो दधि रक्ष्यताम्', इत्यादिषु निरूढलक्षणा। शक्तिवदचिरेणैव लक्ष्यार्थप्रतीतिप्रयोजिका लक्षणा निरूढलक्षणेति तत्त्वम्। प्रकरणादिना कथंचित् लक्ष्योपस्थापिका स्वारसिकलक्षणा। यथा 'सप्त पदार्थाः', 'नव द्रव्याणि', इत्यादिषु विभाजकधर्मसप्तकनवकान्यतमवदादिबोधिका स्वारसिकलक्षणा। इयं विलम्बितप्रतीतिप्रयोजिका। पुनः इयं लक्षणा जहल्लक्षणा अजहल्लक्षणा चेति द्विविधा। शक्यतावच्छेदकाप्रकारकलक्ष्यतावच्छेदकप्रकारकबोधप्रयोजिका जहल्लक्षणा। यथा 'गङ्गायां घोषः' इति। अत्र शक्यतावच्छेदकप्रवाहत्वाप्रकारकलक्ष्यतावच्छेदकतीरत्वप्रकारकबोधजननात् समन्वयः। अत्र तीरे घोष इति बोधो जायते। शक्यार्थपरित्यागेसत्यन्यार्थग्रहणं जहल्लक्षणयेति भावः। लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयार्थबोधप्रयोजिका लक्षणा अजहल्लक्षणा। 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र दध्युपघातकत्वरूपेण काककुक्कुटबिडालादिशक्यलक्ष्योभयबोधप्रयोजिका अजहल्लक्षणा। शक्यार्थापरित्यागेनान्यार्थग्रहणमजहल्लक्षणयेति भावः। अत्र इष्टसाधनीभूतदध्युपघातकापादानकदधिरक्षणानुकूलकृतिमानिति बोधः। न्यायमते जहदजहल्लक्षणा नाङ्गीक्रियते। दीपिकायाम् "तत्त्वमसि" इत्यादौ जहदजहल्लक्षणाप्रतिपादनं तु वेदान्तिनां मतानुसारेण। गौणी वृत्तिरपि लक्षणायामन्तर्भवति, व्यञ्जनावृत्तेः शक्त्यनुमानाभ्यां चारितार्थ्यमित्यादि दीपिकाप्रकाशादौ स्पष्टम्।

अथ लक्षणास्थलीयशाब्दबोधसामग्री प्रदर्श्यते। प्रथमं पदज्ञानम्। तदनु शक्तिज्ञानम्। द्वाभ्यां शक्यार्थोपस्थितिः। तदन्वन्वयानुपपत्तेः तात्पर्यानुपपत्तेर्वा ज्ञानम्। अनन्तरं लक्ष्यपदार्थतात्पर्यज्ञानम्। तदनु लक्ष्यपदार्थोपस्थितिः। तदनु लक्ष्यपदार्थविषयकः शाब्दबोधः। यथा 'गङ्गायां घोषः' इत्यत्र प्रथमं गङ्गापदज्ञानम्। तदनु सप्तमीविभक्तिज्ञानम्। तदनु घोषपदज्ञानम्। तदनु गङ्गादिपदानां शक्तिज्ञानानि। तदनु प्रवाहाद्युपस्थितयः। अनन्तरं प्रवाहवृत्तित्वं घोषे अनुपपन्नमित्यन्वयानुपपत्तिज्ञानम्। तदनु गङ्गापदस्य प्रवाहवाचकत्वे स्वीकृते तीरे वक्तृतात्पर्यमनुपपन्नमिति तात्पर्यानुपपत्तिज्ञानम्। तदनु गङ्गापदं तीरे लाक्षणिकमिति लाक्षणिकत्वज्ञानम्। तदनु गङ्गापदात्तीरोपस्थितिः। तदन्वाकांक्षादिसामग्रीबलात्तीरवृत्तिर्घोष इति बोधः। लक्षणास्थले कुत्रचित् अन्वयानुपपत्तिर्लक्षणाबीजम्। यथा 'गङ्गायां घोषः', 'मञ्चाः क्रोशन्ति' इत्यादौ। कुत्रचित्तात्पर्यानुपपत्तिः, यथा 'यष्टीः प्रवेशय', 'छत्रिणो यान्ति', इत्यादौ इति केचित्। सर्वत्र तात्पर्यानुपपत्तेः संभवेन तात्पर्यानुपपत्तिरेव लक्षणाबीजमिति सिद्धान्तः। प्रकरणादिकं तात्पर्यग्राहकम्। तच्च संदर्भभेदेन देशकालादयो भवन्ति। प्रथमान्तमुख्यविशेष्यकशाब्दबोधः यथा 'कुमारमानयति मयूरः' इत्यत्र कुमारकर्मकानयनानुकूलकृतिमान् मयूरः इति। धात्वर्थमुख्यविशेष्यकबोधो वैयाकरणानाम्। 'भावप्रधानमाख्यातम्' इति नियमः तेषाम्। भावो धात्वर्थः। प्रधानं विशेष्यम्। यथा मयूरकर्तृकं कुमारकर्मकम् आनयनमिति। मीमांसकैः आख्यातार्थमुख्यविशेष्यकबोधः स्वीक्रियते। यथा कुमारकर्मकानयनानुकूला मयूरसमवेता कृतिरिति। 'परोक्षमनाहार्यमसन्दिग्धम्' इत्युक्त्या परोक्षः आहार्यज्ञानभिन्नः संशयभिन्नश्च भवति शाब्दबोधः।

न्यायमते पुनरपि शाब्दबोधः द्विविधः लौकिको वैदिकश्च। आद्यः आप्तवाक्यजन्यः। द्वितीयः श्रुतिस्मृत्यादिजन्यः। विधिनिषेधार्थवादभेदात् पुनरपि त्रिविधः इत्याद्यन्यत्र विस्तरः।



आकाङ्क्षा योग्यता सन्निधिश्च वाक्यार्थज्ञाने हेतुः। पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा।

ननु यदि पदज्ञानं वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितिद्वारा शाब्दबोधजनकम्, तदा घटः कर्मत्वम् आनयनं कृतिः इत्यादितः शाब्दबोधापत्तिः। तत्र घटादिपदज्ञानस्य वृत्तिज्ञानसहकृतघटादिपदज्ञानजन्यपदार्थोपस्थितिरूपव्यापारसहितस्य सत्त्वादित्यत आह—आकाङ्क्षेति। पदज्ञानपदार्थोपस्थितितात्पर्यज्ञानानां पुरुषनिष्ठानां संग्रहाय चकारः। तथाच आकांक्षादयः षट् मिलित्वा शाब्दबोधं जनयन्तीति भावः। एवं च 'घटः कर्मत्वम्' इत्यादौ वक्ष्यमाणाकाङ्क्षाया अभावात् न शाब्दबोध इति भावः।

नन्वाकाङ्क्षा नाम इच्छा, योग्यता सद्गुणवत्त्वम्, सन्निधिः सान्निध्यम्, इतीदम् अचेतने शब्दे कथं स्यादिति शंकां निराकरोति पदस्येत्यादिना। यत्पदस्य यत्पदाभावप्रयुक्तः यादृशान्वयबोधजनकत्वाभावः तत्पदस्य तत्पदवत्त्वं तादृशान्वयबोधे आकाङ्क्षेत्यर्थः। पदस्येति षष्ठ्याः आधेयत्वमर्थः। तस्यान्वयाननुभावकत्वेऽन्वयः। तथाच यत्पदनिष्ठशाब्दबोधजनकत्वाभावः यत्पदान्तराभावप्रयुक्तः तत्पदे तत्पदवत्त्वमाकाङ्क्षा इति योजना। तत्पदे तत्पदवत्त्वं च स्वाव्यवहितपूर्वत्वस्वाव्यवहितोत्तरत्वान्यतरसंबन्धेन ज्ञेयम्। घटमानयेत्यत्र जायमानः 'घटीयं कर्मत्वम्' इति बोधः 'घट' इति पदात् न जायते इत्यनुभवात् तन्निष्ठः निरुक्तशाब्दबोधजनकत्वाभावः अम्पदाभावप्रयुक्तः। एवं अम्पदे घटपदाभावप्रयुक्तः। तथा च घटपदे अम्पदवत्त्वम् अम्पदे घटपदवत्त्वं च आकाङ्क्षा। एवं च घटः कर्मत्वम् इत्युक्तौ घटीयं कर्मत्वमिति बोधानुदयात् घटपदस्य न कर्मत्वपदव्यतिरेकप्रयुक्तशाब्दबोधजनकत्वाभावः इति न तयोराकाङ्क्षा इति न कोऽपि दोष इति भावः।

अर्थाबाधो योग्यता।

योग्यतां लक्षयति—अर्थाबाध इति। अर्थस्याबाधः, असंबन्धा-

भावः, अर्थसंबन्ध इति यावत्। तथा च पदार्थस्य पदार्थान्तरसंबन्धो योग्यता। योग्यता अर्थनिष्ठा। आकाङ्क्षासन्निधी तु शब्दनिष्ठाविति ध्येयम्। वस्तुतस्तु अत्रायमर्थः अर्थस्याबाधः = बाधनिश्चयाभावः। बाधनिश्चयः = तदभावप्रकारकनिश्चयः। एकपदार्थे इत्यध्याहार्यम्[1]। अर्थपदम् अपरपदार्थपरम्। तथाचैकपदार्थे अपरपदार्थबाधनिश्चयाभावः योग्यतेति पर्यवसितार्थः। अत्र एकपदार्थे इति सप्तम्याः विशेष्यतानिरूपकत्वमर्थः। अर्थस्येति षष्ठ्याः प्रतियोगितानिरूपकत्वमर्थः। विशेष्यतानिरूपकत्वस्य निश्चये, प्रतियोगितानिरूपकत्वस्य बाधशब्दार्थीभूताभावे चान्वयः। तथा च एकपदार्थविशेष्यकः अपरपदार्थप्रतियोगिकाभावप्रकारकश्च यो निश्चयः तदभावः योग्यतेति फलितम्। सा च आत्मनिष्ठा। एवं च 'अग्निना सिंचति' इत्यत्र अग्निकरणकत्वाभाववत् सेचनम् इति सेचनविशेष्यकाग्निकरणकत्वाभावप्रकारकबाधनिश्चयसद्भावेन अग्निकरणकं सेचनमिति प्रमात्मकबोधो न संभवति। 'जलेन सिंचति' इत्यत्र जलकरणकत्वाभाववत्सेचनमिति बाधनिश्चयाभावेन जलकरणकं सेचनमिति प्रमात्मकबोधः संभवति। अतः योग्यतापि शाब्दबोधे कारणम्।

पदानामविलम्बेनोच्चारणं सन्निधिः।

सन्निधिं लक्षयति—पदानामिति। अविलम्बेनोच्चारणमिति। अव्यवहितोच्चारणमित्यर्थः। यत्पदार्थेन समं यत्पदार्थस्यान्वयः तात्पर्यविषयः, तयोः पदयोः अव्यवधानेनोच्चारणं सन्निधिरिति बोध्यम्। यथाश्रुते 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इत्यादौ गिरिपदभुक्तपदयोः अव्यवधानसत्त्वादतिव्याप्तिः। एवं परिष्कृते तु गिरिपदार्थभुक्तपदार्थयोरन्वयः न तात्पर्यविषयः, अपि तु गिरिपदार्थाग्निमत्पदार्थयोरेवेति तयोर्व्यवधानसत्त्वान्नातिव्याप्तिः। तथाच प्रहरे प्रहरे उच्चारिते गामानयेत्यादिवाक्ये

---

१. यदि इत्थमध्याहारो नेष्यते, तदा "अर्थानां वाक्यघटकपदशक्यानाम्, अबाधः तात्पर्यविषयपरस्परसंबन्धः" इति विग्रहवाक्यम्, अर्थानामिति षष्ठ्याः निष्ठत्वार्थकत्वं च अङ्गीकृत्य 'वाक्यघटकपदशक्यनिष्ठः विवक्षितपरस्परसंबन्धः योग्यता' इति व्याख्येयम्। इयं च योग्यता अर्थनिष्ठा।



सन्निध्यभावाच्छाब्दबोधाभावः। अत्र मौनिश्लोकादावव्याप्तिपरिहाराय अविलम्बेन पदार्थोपस्थितिरेव सन्निधिरिति स्वीकार्यम्। उच्चारणं तु तदुपयोगितयेति मन्तव्यम्। तथा च आकाङ्क्षादिषु मध्ये आकाङ्क्षा पदनिष्ठा, योग्यता आत्मनिष्ठा, सन्निधिस्तु अर्थोपस्थितिनिष्ठः, इति ध्येयम्।

आकाङ्क्षादिरहितं वाक्यं न प्रमाणम्। यथा 'गौरश्वः पुरुषो हस्ती' इति वाक्यं न प्रमाणम्, आकाङ्क्षाविरहात्। 'अग्निना सिंचति' इति वाक्यं न प्रमाणम्, योग्यताविरहात्। प्रहरे प्रहरे असहोच्चरितानि 'गाम्, आनय' इत्यादिपदानि न प्रमाणम्, सन्निध्यभावात्। वाक्यं द्विविधं वैदिकं लौकिकं चेति। वैदिकम् ईश्वरोक्तत्वात्सर्वमपि प्रमाणम्। लौकिकं तु आप्तवाक्यं प्रमाणम्। अन्यदप्रमाणम्। वाक्यार्थज्ञानं शाब्दज्ञानम्। तत्करणं शब्दः। एवं यथार्थानुभवो निरूपितः।

इति सर्वतन्त्रस्वतन्त्रान्नंभट्टविरचिते तर्कसंग्रहे शब्दपरिच्छेदः समाप्तः।

आकाङ्क्षादीनां शाब्दबोधहेतुत्वं व्यतिरेकमुखेन निर्वक्ति—आकाङ्क्षेति। उदाहरति—यथा इति। आकाङ्क्षाविरहादिति। पञ्चम्याः प्रयोज्यत्वमर्थः। तस्य 'न प्रमाणम्' इत्यत्र प्रमाणप्रतियोगिकभेदेऽन्वयः। नन्वत्र 'गौरश्वः' इत्यादिवाक्ये गवादिपदार्थस्य किम् अनुच्चरितचरतिधावत्यादिपदार्थान्वयेऽप्रमाणत्वम्? उताश्वादिपदार्थान्वये? नाद्यः; चरति, धावतीत्यादिपदसन्निध्यभावेन तत्र सन्निधिरूपकारणविरहादेवाप्रमाणत्वनिर्वाहात्। नापि द्वितीयः; गवाभेदस्याश्वे बाधितत्वेन योग्यताभावादेव तत्र शाब्दबोधानापत्तेरिति इदमुदाहरणम् असमञ्जसमिति चेत्, न; 'नोदाहरणमादर्तव्य'मिति न्यायात् अत्र 'घटः कर्मत्वम् आनयनं कृतिः' इत्याद्युदाहरणानि बहूनि सन्तीत्यभिप्रायात्। ननु यथा 'घटमानये'ति वाक्येन प्रातिपदिकार्थो घटः, प्रत्ययार्थः कर्मत्वम्, धात्वर्थ आनयनम्, आख्यातार्थः कृतिरिति पदार्था उपस्थाप्यन्ते, तथा ते सर्वे घटः कर्मत्वम् आनयनं कृतिः इति वाक्येनापि। अतः सन्निधिः योग्यता च

वर्तते। तथापि कुतो न आधेयतासंबन्धेन घटविशिष्टकर्मत्वस्य, आनयनविषयककृतेर्वा बोधः इति चेत्, तादृशान्वयबोधप्रयोजकाकाङ्क्षायाः तत्राभावात्। घटपदस्य तादृशान्वयाननुभावकत्वं न कर्मत्वपदाभावात्, किन्तु अम्पदाभावात्। सन्निधौ पदनियमः पौर्वापर्यनियमश्च नास्ति। 'पर्वतो वह्निमान्', 'गिरिरग्निमान्', 'वह्निमान् गिरिः', इति यथेच्छं प्रयोगात्। आकाङ्क्षायां स नियमोऽवश्यमङ्गीकार्यः यथा घटपदोत्तरमेव, अम्पदमेव प्रयोक्तव्यम्, न कर्मत्वपदम्, नापि पूर्वमेति। असहोच्चरितानि असहपरस्परासमानाधिकरणसमये उच्चारितानि। अयमेव कालः दर्शितः—प्रहरे प्रहर इति। ईश्वरेति। भ्रमादिदोषरहितत्वेन तदुक्तस्य वेदस्य प्रमितिकरणत्वादिति भावः। इदं स्मृत्यादीनामप्युपलक्षणम्। तत्कर्तृमनुप्रभृतीनामपि भ्रमादिदोषरहितत्वात्। भ्रमप्रमादादिदोषशून्यस्यैव आप्तत्वात्।

अथ शिष्यशिक्षकसौकर्याय किंचिदत्र विव्रियते। प्रमात्मकप्रत्यक्षे लौकिकसंनिकर्षः, भ्रमात्मके पित्तकामलादिदोषश्च कारणम्। प्रमात्मकानुमितिस्तु प्रमात्मकपरामर्शात् भ्रमात्मकपरामर्शाच्च जायते। यथा वह्निव्याप्यधूमवान् पर्वत इति प्रमात्मकपरामर्शात् पर्वतो वह्निमानित्यनुमितिः प्रमात्मिका जायते, तथा धूमव्याप्यवह्निमानिति भ्रमात्मकपरामर्शादपि पर्वतो धूमवानिति प्रमात्मकानुमितिः जायते। भ्रमात्मकानुमितिस्तु भ्रमात्मकपरामर्शादेव जायते। 'ह्रदो वह्निमान्,' 'ह्रदो धूमवान्,' इत्याद्यनुमितीनां व्याप्यंशे, पक्षधर्मतांशे, अंशद्वयेऽपि वा भ्रमात्मकपरामर्शैरेवोत्पद्यमानत्वात्। प्रमात्मकशाब्दबोधस्तु शक्तिप्रमातः शक्तिभ्रमाच्च जायते। पर्वतो वह्निमानिति वाक्यस्थले शक्तिप्रमातः वह्निमदभिन्नः पर्वतः इति प्रमात्मकबोधो जायते। ह्रदो वह्निमानिति वाक्यस्थले ह्रदपदस्य पर्वते शक्तिरिति शक्तिभ्रमात् वह्निमदभिन्नः पर्वतः इति प्रमात्मकबोधो जायते। एवं विपरीततः शक्तिभ्रमात् शक्तिप्रमाया अपि भ्रमात्मकबोधो भवति। स्मृतिभिन्नं सर्वं ज्ञानम् अनुभव एव। संशयभिन्नं सर्वमपि ज्ञानं निश्चय एव। स्मृतेरपि निश्चय एवान्तर्भावः। सर्वांशे प्रमात्मकं ज्ञानं पर्वतो वह्निमानिति। 'पर्वतो वह्निमान्, ह्रदो वह्निमान्' इति समूहालम्बनज्ञानं न सर्वांशे प्रमात्मकम्। ह्रदे वह्न्यंशे भ्रमत्वात्तस्य। सर्वांशे



प्रमात्वं च स्वव्यधिकरणप्रकारावच्छिन्ना या या स्वात्मिका विशेष्यता तत्तदनिरूपकत्वम्। स्वपदं विशेष्यतापरम्। स्वव्यधिकरणप्रकारावच्छिन्नत्वं च स्वव्यधिकरणनिष्ठप्रकारतानिरूपकत्वम्। तथाच पूर्वोक्तसमूहालम्बने स्वपदेन ह्रदनिष्ठविशेष्यतायाः परिग्रहे स्वव्यधिकरणवह्निनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपकत्वमेव वर्तत इति न तस्य सर्वांशे प्रमात्वम्। अत्र स्वव्यधिकरणत्वं न स्वानधिकरणवृत्तितारूपम्। तथात्वे घटो द्रव्यमित्यादिज्ञाने तादृशप्रमात्वाभावप्रसंगः। स्वपदेन घटनिष्ठविशेष्यतायाः ग्रहे तदनधिकरणपटादिवृत्तिद्रव्यत्वनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपकत्वमेव तस्य ज्ञानस्य। अतः स्वव्यधिकरणत्वं स्वाधिकरणवृत्तित्वाभावरूपं विवक्षणीयम्। तादृशव्यधिकरणत्वं न द्रव्यत्वे संभवति। या येति वीप्सानुपादाने ह्रदो वह्निमानित्यादिभ्रमेऽतिव्याप्तिः। स्वव्यधिकरणप्रकारावच्छिन्नज्ञानान्तरीयविशेष्यतानिरूपकत्वस्य तत्र सत्त्वात्। वीप्सायां तु ह्रदनिष्ठायाः एतज्ज्ञाननिरूपितायाः विशेष्यताया अपि परिग्राह्यतया तदनिरूपकत्वाभावात्तिप्रसंगः। अत्रायमनुगमः—विशेष्यताविशिष्टान्यत्वं सर्वांशे प्रमात्वम्। वैशिष्ट्यं च स्वविशिष्टविशेष्यतानिरूपकत्वसंबन्धेन। स्वपदं विशेष्यतापरम्। स्ववैशिष्ट्यं च विशेष्यतायां स्वतादात्म्यस्वव्यधिकरणनिष्ठप्रकारतानिरूपितत्वोभयसंबन्धेन इति। द्रव्यत्वादिना घटाद्यवगाहि इदं द्रव्यमिति ज्ञानम् जातित्वादिना ह्रदत्वाद्यवगाहिवह्न्यभाववद्ध्रदादिविषयकं जातिमान् वह्न्यभाववान् इत्यादिज्ञानं च सामान्यरूपेण विशेषावगाहिज्ञानमित्युच्यते। इदं ज्ञानं प्रमा भवति। स्थाणुत्वादिना विशेष्यताव्यधिकरणधर्मेण पुरुषाद्यवगाहि 'अयं पुरुषः' इति ज्ञानं भ्रम एव। विशेषरूपेण सामान्यावगाहिज्ञानं नास्तीत्याद्यन्यत्र विस्तरः।

वेदागमादिपरमार्थमशेषतत्त्व-
वेत्तारमार्तपरिरक्षणनित्यदीक्षम्।
कात्यायनीतनुभवं करसक्तशक्तिं
शास्त्रार्थबोधविषये शरणं प्रपद्ये॥

इति श्रीगर्भपुरीनिवासिनः परमास्तिकमूर्धन्यसर्वतन्त्रस्वतन्त्रश्रीसुब्रह्मण्यशास्त्रिवर्याणां तनूजस्य रामशर्मणः कृतौ तर्कसंग्रहव्याख्यायां शक्तिसंजीविन्याख्यायां शब्दपरिच्छेदः ।

---

अयथार्थानुभवः त्रिविधः संशयविपर्ययतर्कभेदात् । एकस्मिन् धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यावगाहि ज्ञानं संशयः । यथा स्थाणुर्वा पुरुषो वा इति ।

। नमः शिवकुमाराय ।

अयथार्थानुभूत्यादिनिरूपणकृते सदा ।
यथार्थमेकं कल्याणं शक्तिहेति श्रये महः ॥

प्रत्यक्षादीनाम् अनुभवानां यथार्थायथार्थभेदेन द्वैविध्यं पूर्वमुक्तम् । तत्र यथार्थप्रत्यक्षादयः निरूपिताः । इदानीम् अयथार्थानुभवं विभजते —अयथार्थानुभव इत्यादिना ।

संशयं लक्षयति—एकस्मिन्निति । धर्मिणीति सप्तम्याः विशेष्यत्वमर्थः । विरुद्धनानाधर्मवैशिष्ट्यावगाहिज्ञानमिति । विरुद्धनानाधर्मप्रकारकमित्यर्थः । संशय इति लक्ष्यनिर्देशः । तथाच एकधर्मिविशेष्यकत्वे सति विरुद्धनानाधर्मप्रकारकत्वे सति ज्ञानत्वं संशयस्य लक्षणम् । 'स्थाणुर्वा पुरुषो वे'ति संशये पुरोवर्तिवस्तुरूपैकधर्मिविशेष्यकत्वस्य स्थाणुत्वपुरुषत्वरूपविरुद्धनानाधर्मप्रकारकत्वस्य ज्ञानत्वस्य च सत्त्वात्समन्वयः । अत्र ज्ञानत्वमात्रोक्तौ विपर्ययादिष्वतिव्याप्तिः । ज्ञानत्वानुपादाने संशयजन्यसंस्कारे 'स्थाणुर्वा पुरुषो वेति संशयो मे भूयात्, इतीच्छायां चातिव्याप्तिः ।[1]

विरुद्धनानाधर्मप्रकारकत्वे सति ज्ञानत्वमात्रोक्तौ 'पर्वतो वह्निमान् ह्रदो वह्न्यभाववान्' इति ज्ञानेऽतिव्याप्तिः । अत्र समूहालम्बनज्ञाने वह्निवह्न्यभावरूपविरुद्धनानाधर्मयोः पर्वतह्रदरूपधर्मिभेदयोः प्रकारत्वात् । एकधर्मिविशेष्यकत्वोपादाने तु निरुक्तज्ञानस्य धर्मिद्वयमुख्यविशेष्यकतया नातिव्याप्तिः । नानापदानुपादाने 'पर्वतो वह्न्यभावविरुद्धवह्निमा'निति ज्ञानेऽतिव्याप्तिः । तत्र पर्वतरूपैकधर्मिविशेष्यकवह्न्यभावविरुद्धवह्निरूपविरुद्धधर्मप्रकारकत्वस्य सत्त्वात् । अतो नानापदम् । तन्निवेशे तु तत्र वह्न्यभावविरुद्धवह्निरूपैकधर्मस्यैव प्रकारत्वेन नानाधर्मप्रकारकत्वाभावात् । नचैवमपि 'पर्वतो वह्न्यभावविरुद्धवह्निधूमवान्' इति वह्निधूमोभयांशेऽपि वह्न्यभावविरुद्धत्वावगाहिनि निश्चये अतिव्याप्तिः इतिवाच्यम् । मुख्यप्रकारी-

---

1 ननु ज्ञानपदोपादानेऽपि 'स्थाणुर्वा पुरुषो वेति ज्ञानं संशयः' इत्याकारकसंशयविषयकनिश्चये अतिव्याप्तिवारणाय विरुद्धनानाधर्मप्रकारतानिरूपितमुख्यविशेष्यताकत्वस्य विवक्षणीयतया तेनैव एतादृशेच्छायाः अपि वारणसंभवः । किंच संस्कारं प्रति निश्चयत्वेनैव हेतुत्वम्, संशयात्संस्कारानुत्पत्तेः । तथैव कारिकावलीमुक्तावल्यादिषु उक्तत्वात् । तथाच संशयजन्यसंस्कारस्यापि अप्रामाणिकतया (अनुक्तः) तद्वारणार्थमपि ज्ञानपदम् अनावश्यकमेव इति चेत्, यदा शुक्लषष्ठ्यां चैत्रः भोजनजन्यतृप्तिकामः उपवासजन्याभ्युदयकामश्च भवति तदा इच्छति 'भोजनं वा कुर्याम् उपवासं वा कुर्या'मिति । तादृशविरुद्धनानाधर्मप्रकारतानिरूपितमुख्यविशेष्यताकेच्छायां सर्वानुभवसिद्धायामतिव्याप्तिवारणाय ज्ञानपदमित्यवेहि । एतादृशेच्छां मनसि कृत्वैव "इच्छाद्युदसनार्थं विशेष्यभागः" इति संशयग्रन्थे दिनकरभट्टाः ।

इदमत्रावधेयम्—इच्छात्वेनाभिमतं 'भोजनं कुर्याम्, उपवासं वा' इत्येतत् संशयरूपमेव, नत्विच्छारूपम् । अतएव "तद्व्यचिकित्सत् । जुहवानी ३ मा हौषा ३ मिति । तद्विचिकित्सायै जन्म" ( तै.ब्रा. II अनु २ ) इति श्रुत्या 'होमं कुर्यां वा न वा' इति कोटिद्वयविषयकविचिकित्सारूपत्वमेवोक्तम् । "विचिकित्सा तु संशयः" इत्यमरः । 'कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च' इति संशयेऽपि सन्प्रत्ययस्मरणाच्च । "व्यचिकित्सत्, सन्देहं कृतवान् । विविधस्य केतनस्य ज्ञानस्येच्छा विचिकित्सा । कोटिद्वयात्मकः संशय इत्यर्थः ।" इति हि तत्र सायणभाष्यम् । तथाच 'निरुक्तेच्छावारणायापि संशयलक्षणे ज्ञानपदस्य नावश्यकता ।' तस्मात् 'विरुद्धकोटिकस्वरूपसंशयलक्षणं ज्ञान एव संभवति, नान्यत्र' इति सूचनायैव लक्षणे ज्ञानपदोपादानम्, नतु लक्षणकोटिप्रविष्टं तत्, वैयर्थ्यात् इति ।

भूतनानाधर्मयोः परस्परं विरोधस्य विवक्षितत्वात्। निरुक्तज्ञानीयवह्नि-धूमयोः परस्परमविरुद्धत्वात्। विरुद्धपदानुपादाने 'घटपटवद् भूतल'मिति एकत्र द्वयमिति रीत्याऽवगाहिज्ञाने एकधर्मिविशेष्यकत्वनानाधर्मप्रकारकत्वज्ञानत्वानां सत्त्वादतिव्याप्तिः। विरुद्धपदनिवेशे तु घटपटयोर्विरुद्धत्वाभावान्नातिव्याप्तिः।

नन्वत्र धर्मयोः परस्परविरुद्धत्वं परस्पराभावव्याप्यत्वमेव वक्तव्यम्। तथा सति 'नरो वा सिंहो वा' इति संशये 'पुरुषो वा मृगो वा' इति संशये च अव्याप्तिः। नरत्वसिंहत्वयोः श्रीनरसिंहशरीरे, पुरुषत्वमृगत्वयोः पुरुषमृगशरीरे च सहविद्यमानतया परस्पराभावाव्याप्यत्वात् इति चेत्, न; अत्र विरुद्धपदेन तदवच्छिन्नप्रकारताकज्ञानप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकत्वस्यैव विवक्षितत्वात्। 'स्थाणुर्वा पुरुषो वा' इति संशयस्यापि 'स्थाणुर्वा, न वा, पुरुषो वा, न वा,' इति चतुष्कोटिकत्वात्। तद्वत्ताज्ञानं प्रति तदभाववत्ताज्ञानत्वेन प्रतिबन्धकत्वात्। अतएव "एकधर्मिकविरुद्धभावाभावप्रकारकं ज्ञानं संशयः" इति मुक्तावली। तथाच "नरो वा सिंहो वा" इत्यादि संशयस्यापि निरुक्तरीत्या भावाभावरूपचतुष्कोटिकतया नाव्याप्तिः। तथाच 'मयूरः स्कन्दसंयोगवान् तदभाववांश्चे'ति समुच्चये अतिव्याप्तिवारणायैव विरुद्धपदनिवेशो बोध्यः। एकधर्मिविशेष्यकत्वे सति ज्ञानत्वमात्रोक्तौ ह्रदो वह्न्यभाववानित्यादौ अतिव्याप्तिः। विरुद्धनानाधर्मप्रकारकत्वनिवेशे तु वह्न्यभावस्यैकस्यैव तत्र प्रकारतया विरुद्धनानाधर्मप्रकारकत्वाभावान्नातिव्याप्तिः इति सर्वदलसार्थक्यम्।

नन्वेवमपि "शते पंचाशत्" इति न्यायेन 'पर्वतो वह्निमान् ह्रदो वह्न्यभाववान्' इति समूहालम्बने एकधर्मिविशेष्यकत्वस्यापि सत्त्वादतिव्याप्तिरिति चेत्, न एकधर्मिनिष्ठविशेष्यतानिरूपिता या विरुद्धनानाधर्मनिष्ठाः प्रकारताः तन्निरूपकत्वस्यैव विवक्षितत्वात्। प्रकृते च एकधर्मिनिष्ठविशेष्यतानिरूपिता न नानाधर्मप्रकारता इति नातिव्याप्तिः। एवमपि 'द्रव्यं वह्निमत्, ह्रदो वह्न्यभाववान्' इति समूहालम्बने द्रव्यत्वेन रूपेण ह्रदस्यापि विशेष्यतया एकस्मिन् ह्रदरूपे धर्मिणि वह्नितदभावयोः



प्रकारत्वेन अतिव्याप्तितादवस्थ्यम्। तद्वारणाय एकधर्मावच्छिन्नविशेष्यतानिरूपितत्वं विरुद्धनानाधर्मनिष्ठप्रकारतासु विशेषणीयम्। तथाच द्रव्यत्वह्रदत्वाभ्यां भासमानह्रदरूपैकधर्मिणि नानाधर्मयोः प्रकारत्वेऽपि एकधर्मावच्छिन्ने द्रव्यत्वावच्छिन्ने ह्रदत्वावच्छिन्ने वा विरुद्धनानाधर्मयोः प्रकारत्वाभावेन एकधर्मावच्छिन्नविशेष्यतानिरूपितविरुद्धनानाधर्मनिष्ठप्रकारताकत्वाभावान्नातिव्याप्तिः। न च तथापि 'ह्रदो वह्निमान् वह्न्यभाववांश्चे'ति समुच्चयज्ञानेऽतिव्याप्तिः। तत्र ह्रदत्वरूपैकधर्मावच्छिन्नविशेष्यतानिरूपितविरुद्धनानाधर्मनिष्ठप्रकारतानिरूपकत्वस्य सत्त्वादिति वाच्यम्। प्रकारताविशिष्टविशेष्यतानिरूपकत्वस्य विवक्षितत्वात्। विशेष्यतायां प्रकारतावैशिष्ट्यं च स्वनिरूपितत्वस्वावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभाववत्त्वावच्छिन्नप्रकारतानिरूपितत्वोभयसंबन्धेन। तथा चैतस्मिन् समुच्चयज्ञाने प्रकारताद्वय निरूपित विशेष्यताद्वयस्याङ्गीकृततया[1] वह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यतायाः वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतायाश्च परस्परं भिन्नतया निरुक्तसंबन्धद्वयेन प्रकारताविशिष्टा विशेष्यता न काऽप्यत्र भवति। कुतः? स्वपदेन वह्नित्वावच्छिन्नप्रकारतायाः ग्रहणे स्वनिरूपितविशेष्यतायां स्वाभावनिष्ठप्रकारतानिरूपितत्वं न संभवति। एवं स्वाभावनिष्ठप्रकारतानिरूपितविशेष्यतायां

---

१. इदमत्रावधेयम्—एकधर्मिविशेष्यकत्वदले एकत्वं धर्मितावच्छेदके धर्मितायां (विशेष्यतायां) चान्वेति। एतादृशान्वयश्च प्रामाणिक एव। अत एव पंचलक्षणीग्रन्थे "सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्व"मिति लक्षणव्याख्याने "साकल्यं साध्याभाववति साध्ये च बोध्यम्" इति दीधितिः। तथाच 'द्रव्यं वह्निमत्,' 'ह्रदो वह्न्यभाववान्' इति समूहालम्बने नातिप्रसङ्गः। एवमेव समुच्चये विशेष्यताद्वयानभ्युपगमेऽपि न दोषः। किंच 'ह्रदो वह्निमान् वह्न्यभाववांश्च' इति समुच्चयज्ञानस्य निरुक्तस्य अनाहार्यनिश्चयरूपत्वे तस्य उत्पत्तिरेव न संभवति। तद्वत्ताज्ञानतदभाववत्ताज्ञानयोः कार्यकारणभावेन तत्तदभावविशिष्टबुद्धिप्रतिबन्धकत्वात्। तस्य आहार्यरूपत्वे तत्र परस्परप्रतिबन्धकतावच्छेदकप्रकारतयोरभावेनैव नातिव्याप्तिः। 'नरो वा सिंहो वा' इति संशये अव्याप्तिवारणाय निरुक्तरीत्या लक्षणपरिष्कारस्य पूर्वमेव प्रतिपादितत्वात् इति।

…त्वं न भवति। अतः निरुक्तसंबन्धद्वयेन प्रकारता-…ता विशेष्यता न काऽप्येतादृशज्ञानीया प्रसिद्धा भवितुमर्हतीति नैतादृशसमुच्चयज्ञाने अतिव्याप्तिः। प्रकारताद्वयनिरूपितैक-विशेष्यतायाः संशयेऽङ्गीकृततया तादृशप्रकारताविशिष्टविशेष्यतानिरूपकत्वस्य सत्त्वात् समन्वयश्चेति न काप्यनुपपत्तिः। भावद्वयकोटिकसंशयाङ्गीकर्तृमते तु उक्तप्रकारतावैशिष्ट्यं स्वनिरूपितत्वस्वाश्रयविरुद्धधर्मनिष्ठप्रकारतानिरूपितत्वोभयसंबन्धेन ग्राह्यम्। अन्यथा 'घटत्ववान् पटत्ववांश्च पटः' इति समुच्चयेऽतिव्याप्तिरिति ज्ञेयम्। 'वह्न्यभाववद्ध्रदो वह्निमान्' इत्याहार्यनिश्चये च विरुद्धयोः वह्नितदभावयोः विषयत्वेऽपि वह्न्यभावनिष्ठविषयतायाः अत्र विशेष्यतावच्छेदकतारूपत्वेन अवच्छेदकत्वानात्मकप्रकारताविशिष्टविशेष्यताकत्वस्य लक्षणतया विवक्षणात् तत्रैतादृशलक्षणाभावान्नातिव्याप्तिरित्यलं कर्कशविचारपरंपरया।

संशयमुदाहरति—स्थाणुर्वा इति। विरोधविषयतायां संशयजनकीभूतदोषविशेषस्य नियामकत्वमिति तद्बोधकवाशब्देनोल्लेखः संशयस्य। अत्र स्थाणुर्वा पुरुषो वेति वाक्येन संशयाभिलापस्थले स्थाणुपुरुषपदयोः स्थाणुत्वपुरुषत्वार्थकत्वम्। उभयत्र वाकारयोः स्थाणुत्वाभावपुरुषत्वाभावार्थकत्वं च। तथाच स्थाणुत्वस्थाणुत्वाभावपुरुषत्वपुरुषत्वाभावकोटिकः संशय इत्येकं मतम्। स्थाणुपदस्य स्थाणुत्वमर्थः, पुरुषपदस्य स्थाणुत्वाभावोऽर्थः। अथवा पुरुषपदस्य पुरुषत्वमर्थः, स्थाणुपदस्य पुरुषत्वाभावोऽर्थः। वाकारद्वयं प्रकारताद्वयनिरूपितोक्तविशेष्यतासूचकम्। तथाच स्थाणुत्वस्थाणुत्वाभावकोटिकः पुरुषत्वपुरुषत्वाभावकोटिको वा संशय इत्यन्यन्मतम्। मतद्वयेऽपि भावद्वयकोटिकः संशयो नास्ति। भावद्वयकोटिकसंशयाङ्गीकर्तारस्तु स्थाणुपुरुषपदयोः स्थाणुत्वपुरुषत्वार्थकत्वं वाकारद्वयस्य 'अयं स्थाणुः पुरुषश्चे'ति समुच्चयव्यावृत्तप्रकारताद्वयनिरूपितैकविशेष्यताकत्वसूचकत्वं च। अतः तेषां मते 'स्थाणुर्वा पुरुषो वा' इत्यत्र स्थाणुत्वपुरुषत्वकोटिकः संशय एव भवति। भावद्वयकोटिकसंशयमते विरुद्धनानाधर्मपदेन स्थाणुत्वपुरुषत्वरूपौ धर्मौ, मतान्तरे च स्थाणुत्व-



स्थाणुत्वाभावपुरुषत्वपुरुषत्वाभावादिविरुद्धभावाभावौ चादाय समन्वयः इति ज्ञेयम्। इति संशयभेदस्वरूपनिर्णयः।

**मिथ्याज्ञानं विपर्ययः। यथा शुक्तौ इदं रजतमिति ज्ञानम्।**

पूर्वं प्रत्यक्षपरिच्छेदे अनुभवविभागस्थले अयथार्थानुभवं सोदाहरणं निरूपितमपि प्रकरणानुरोधेन पुनरपि विशदयति—मिथ्येति। मिथ्या च तत् ज्ञानं चेति समासः। तत्र ज्ञाने मिथ्यात्वं च तदभाववद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वम्। तथाच तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकत्वे सति ज्ञानत्वं विपर्ययलक्षणम्। शुक्ताविदं रजतमिति ज्ञाने तत्पदग्राह्यरजतत्वाभाववच्छुक्तिनिष्ठविशेष्यतानिरूपितरजतत्वनिष्ठप्रकारताकत्वज्ञानत्वयोः सत्त्वात्समन्वयः। नन्वेवं सति 'स्थाणुर्वा पुरुषो वे'ति संशये, 'यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्यात्' इति तर्के च एतल्लक्षणस्यातिव्याप्तिरिति चेत्, न; तर्कभिन्नत्वनिश्चयत्वयोर्निवेशात्।[1]

**व्याप्यारोपेण व्यापकारोपस्तर्कः। यथा यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्यादिति।**

तर्कं निरूपयति—व्याप्येति। व्याप्यस्य आरोपः, व्यापकस्य आरोपः इति उभयत्र षष्ठीतत्पुरुषः। आरोपः आहार्यभ्रमः। स च बाधकालिकेच्छाजन्यज्ञानम्। बाधज्ञाने सत्येव इच्छयोत्पादितविपरीतज्ञानमिति भावः।

---

१. वस्तुतस्तु तर्कभिन्नत्वदलनिवेशनं न मूलकृदभिप्रेतम्। तेरेव दीपिकायाम् "तदभाववति तत्प्रकारकनिश्चयः" इति संशयव्युदासार्थं निश्चयदलं स्वीकृत्य तर्कग्रन्थव्याख्यानावसरे "यद्यपि तर्को विपर्यये अन्तर्भवति, तथापि प्रमाणानुग्राहकत्वात् भेदेन कीर्तनम्" इत्युक्तत्वात्। अत एव नीलकण्ठप्रकाशिकायाम् "आहार्यव्याप्यवत्ताभ्रमजन्याहार्यव्यापकवत्ताभ्रमः तर्कः" इति भ्रमपदघटितमेव तर्कलक्षणं कृतम्। भ्रमपदस्य विपर्ययसमानार्थकत्वात्। तथाच आहार्यानाहार्यत्वे लक्षणकोट्यप्रविष्टे तर्कविपर्यययोः भेदके इति ग्रन्थकृतामाशय इति भाति। शक्तिसंजीविन्यामपि अनुपदमेव भ्रमपदघटितमेव तर्कलक्षणं कृतम्। तथाचात्र तर्कभिन्नत्वदलनिवेशो अन्योन्याश्रयः।

न्यथा मुखे पद्मत्वारोपः अपद्मत्वज्ञानकालिकेच्छाजनितः। तथाच तर्कं प्रति अत्र 'यदि वह्निर्न स्यात्' इत्यादि वह्न्यभावधूमाभावरूपयोः व्याप्य-व्यापकयोः बाधनिश्चयः कारणम्। अन्यथा पर्वते धूमोऽस्तु वह्निर्मास्तु इत्यप्रयोजकशंकावतरणे इष्टापत्तिः अभ्युपगम्येत। ततश्च तर्कानुत्पत्ति-प्रसंग इति तस्य कारणत्वं स्वीकार्यम्। व्याप्यस्य व्यापकस्येति षष्ठीद्वय-स्यापि विषयतानिरूपकत्वमर्थः। आरोपः भ्रमः। व्याप्यारोपेणेति तृतीयायाः जन्यत्वमर्थः। तथाच व्याप्यविषयकाहार्यभ्रमजन्यव्यापकविषया-हार्यभ्रमत्वं तर्कस्य लक्षणम्। व्याप्यविषयकः भ्रमः, यदि वह्निर्न स्यादिति भ्रमः। तज्जन्यो व्यापकविषयो भ्रमः तर्हि धूमोऽपि न स्यादिति भ्रमः। तादृशभ्रमत्वस्य यदि वह्न्यभाववान् स्यादिति भ्रमजन्ये तर्हि धूमाभाववान् स्यादिति भ्रमे वर्तमानत्वात् समन्वयः। व्यापकविषयकाहार्यज्ञानत्वमात्रोक्तौ मुखे चन्द्रत्वारोपात्मकाहार्यज्ञाने अतिव्याप्तिः। चन्द्रत्वादेः यत्किंचिद्व्यापक-त्वात्। व्याप्यारोपजन्यत्वनिवेशे तु चन्द्रत्वाद्यारोपः केवलेच्छाजन्यः, न पुनरारोपान्तरजन्यः इति न दोषः इत्यादिकमूह्यम्। पर्वतो वह्निमान् धूमात् इति धूमेन वह्निसाधनेच्छया केनचिदुक्ते, धूमोऽस्तु वह्निर्मास्तु इत्यप्रयोजकशंकायां सत्याम् अनुमानकर्ता धूमं प्रति वह्निः कारणम् 'कारणाभावात् कार्याभावः' इति नियमेन यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्यात् इति कार्यकारण-भावभङ्गानुकूलतर्केण धूमरूपहेतुरव्यभिचारीति निश्चिनोति। अतः तर्कस्य प्रमाणानुग्राहकत्वमिति विज्ञेयम्। स्वप्नात्मकज्ञानस्य अनुभूतपदार्थस्मरणकफ-पित्तादिधातुशुभाशुभादृष्टैः जायमानस्य बाधितार्थविषयकस्य मानसविपर्यय-रूपतया न त्रैविध्यविभागानुपपत्तिः[1]। स्वप्नः = निद्रानामनाडीविशेष-

१. वस्तुतस्तु स्वप्नस्य पूर्वानुभवजन्यत्वेन स्मृतित्वमेव। तथाहि स्वप्नः न मानुभवो भवितुमर्हति। कुतः ? इन्द्रियार्थसन्निकर्षाभावान्न प्रत्यक्षम्। भ्रमव्याप्ति-परामर्शाभावान्नानुमितिः। अतिदेशवाक्यस्मरणस्य पदज्ञानस्य चाभावात् नोपमितिः। नवा शाब्दः। तस्मात् अयथार्थस्मृतिरेव स्वप्नः। अत एव 'अतीतज्ञान-प्रत्यवेक्षणात् स्मृतिरेव स्वप्नः' इति प्रशस्तपादाचार्याः। तथा 'अनुभूतवस्तुस्फुरणतया न स्मरणादर्थान्तरं स्वप्नज्ञानम्' इति वृत्तिकृतः। तथा च नीलकण्ठयां तु स्वप्नस्य अस्मृतित्वस्थापनम्, तदाकरविरुद्धम्' इति भाति।



वच्छिन्नमनःसंयोगः। तदसमवायिकारणके ज्ञाने स्वप्नत्वव्यवहारः गौण इति विभावनीयम्।

**स्मृतिरपि द्विविधा यथार्था अयथार्था चेति। प्रमाजन्या यथार्था। अप्रमाजन्या अयथार्था।**

स्मृतिभिन्नज्ञानानि निरूप्य क्रमप्राप्तां स्मृतिं विभजते—**स्मृतिरपीति**। स्मृतिमात्रस्य पूर्वमेव लक्षणं प्रोक्तम्। इदानीं विभक्तयोर्लक्षणमाह—**प्रमाजन्येत्यादिना**। प्रमाजन्यत्वे सति स्मृतित्वं यथार्थस्मृतेर्लक्षणम्। प्रमाजन्यत्वमात्रोक्तौ प्रमाध्वंसे, स्मृतित्वमात्रोक्तौ अयथार्थस्मृतावप्यतिव्याप्तिरिति दलद्वयम्। गुणत्वदलेनैव ध्वंसेऽतिव्याप्ति-वारणसंभवे प्रमाजन्यसंस्कारे अतिव्याप्तिवारणाय स्मृतित्वदलम्। ननु ज्ञानत्वदलेनैव संस्कारेऽतिव्याप्तिवारणेन पुनरपि स्मृतित्ववैयर्थ्यमिति चेत्, न; विशिष्टज्ञानं प्रति विशेषणज्ञानस्य कारणतया 'दण्डी पुरुषः' इति विशिष्टज्ञाने दण्डरूपविशेषणप्रमाजन्यत्वज्ञानत्वयोः सत्त्वात् तत्रातिव्याप्ति-वारकतया स्मृतित्वस्य सार्थक्यात्।

ननु ध्वंसं प्रति प्रतियोगिनः प्रतियोगित्वेन तत्तद्व्यक्तित्वेन वा कारणत्वम्। तथा विशिष्टबुद्धिं प्रति विशेषणज्ञानमेव कारणम्। न तु विशेषणप्रमा। अतः तत्र कारणतावच्छेदकं न प्रमात्वम्। किन्तु बुद्धित्व-मेव। एवं च तत्रातिव्याप्तिवारणं प्रमात्वावच्छिन्नजनकतानिरूपितजन्यत्व-दलेनैव संभवति। अतः स्मृतित्वदलं व्यर्थप्रायमिति चेत्, इष्टापत्तेः। इदमभिसन्धायैव मूले स्मृतित्वं विहाय प्रमाजन्यत्वमात्रं प्रोक्तम्[1]।

१. इदमत्र बोध्यम्। अनुभवजन्यत्वे सति ज्ञानत्वं स्मृतित्वमिति वक्तव्यम्। अनुभवजन्यसंस्कारे अनुभवे चातिव्याप्तिवारणाय दलद्वय-निवेशः। एवंच प्रमाजन्यत्वे सति स्मृतित्वमिति लक्षणे अनुभवजन्यत्वविशिष्ट-ज्ञानत्वपरत्वं स्मृतिपदस्य न संभवति। विशेषणांशस्य प्रथमदलेन प्रतिपादितत्वात्। "स कीचकैः मारुतपूर्णरन्ध्रैः" इत्यादिस्थलानुरोधेन 'विशिष्टवाचकानां शब्दानां सति विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वम्' इति नियमाभ्युपगमस्य आवश्य-कत्वात्। तथाच एतल्लक्षणघटकस्मृतिपदं ज्ञानपरमेवेति न कोऽपि दोषः।

अप्रमेति। भ्रमजन्यत्वे सति स्मृतित्वमयथार्थस्मृतेर्लक्षणम्। दलप्रयोजनादिकं पूर्ववत्।

**सर्वेषामनुकूलतया वेदनीयं सुखम्।**

सर्वेषामिति। षष्ठ्याः समवेतत्वं, तृतीयायाः प्रकारकत्वं, विद्धातोः ज्ञानं, प्रत्ययस्य विषयत्वं चार्थः। तथाच सर्वजीवसमवेतानुकूलत्वप्रकारकज्ञानविषयत्वं सुखस्य लक्षणम्। अत्र विषयत्वं विशेष्यतारूपम्। नोचेत् प्रकारतामादाय अनुकूलत्वादावतिव्याप्तिः। सर्वपदाभावे केषांचित् घटो मदनुकूलः इत्यादि ज्ञानसत्त्वात् घटादावतिव्याप्तिः। तदुपादाने तु सर्वेषां घटो मदनुकूलः इति ज्ञानाभावात् नातिव्याप्तिः।

नन्वेवमपि वैषयिके सुखे विरक्तानां द्वेषदर्शनात् वैरिणां सुखे चाविवेकिनां द्वेषदर्शनाच्च सर्वानुकूलत्वप्रकारकज्ञानविषयत्वाभावात् तत्राव्याप्तिरिति चेत्, न; इतरेच्छानधीनेच्छाविषयत्वं सुखस्य निर्दुष्टं लक्षणम्।[1]

---

(अनुवृत्तः) यदि च 'चैत्रमैत्रौ भ्रातरौ, तत्र चैत्रो ज्येष्ठः, मैत्रः कनिष्ठः' इति प्रथमं देवदत्तस्य प्रमानुभवः, तदनन्तरं तस्यैव कालान्तरे दोषविशेषात् उद्बोधकसामग्रीदौर्बल्याद्वा भ्रमस्मृतिः जायते 'मैत्रो ज्येष्ठः, चैत्रस्तु कनिष्ठः' इति, तादृश्यां प्रमानुभवजन्यभ्रमस्मृतौ उक्तलक्षणस्य अतिव्याप्तिः। एवं प्रथमम् 'मैत्रो ज्येष्ठः चैत्रः कनिष्ठः' इति भ्रमानुभवः, तदनन्तरं कालान्तरे किंचित्सहकारिवशात् अनुभवविरोधी यथार्थस्मृतिः जायते 'चैत्रो ज्येष्ठः, मैत्रः कनिष्ठः' इति, तादृशयथार्थस्मृतौ अयथार्थानुभवजन्यायामव्याप्तिश्च। एवमेव वक्ष्यमाणयथार्थस्मृतिलक्षणस्यापि पूर्वोक्तस्थलयोः अव्याप्त्यतिव्याप्ती बोध्ये। एवं यथार्थानुभवाज्जायमानस्य स्वप्नस्य स्मृतिरूपस्यापि सर्वथाऽयथार्थतया उक्तलक्षणयोर्लक्षणत्वमेवेति विभाव्यते; तर्हि तद्वति तत्प्रकारकत्वे सति अनुभवजन्यज्ञानत्वं यथार्थस्मृतिलक्षणम्, तदभाववति तत्प्रकारकत्वे सति अनुभवजन्यज्ञानत्वम् अयथार्थस्मृतिलक्षणमित्येव सुवचम्।

१. इदमत्रावधेयम्—यज्ञाद्यनुष्ठानजन्यस्वर्गस्य सुखरूपस्य, ईश्वरध्यानजन्यसुखविशेषस्य, काव्यरसास्वादजन्यसुखविशेषस्य च वैषयिकसुखात् विलक्षणत्वेन अवश्याभ्युपगन्तव्यतया तेषां सुखविशेषाणां सर्वजीवीयानुकूलत्वप्रकारक-



लोके सुखेच्छैव प्रथममुत्पद्यते तत्साधनतया धनभोजनधर्मादीच्छाः। अतः सुखेच्छाधीनत्वात् साधनेच्छाः सर्वा अपि इतरेच्छाधीनाः। सुखेच्छा तु नैवेतरेच्छाजन्येति इतरेच्छानधीनेच्छाविषयत्वं सुख इति समन्वयः। सुखातिरिक्तेषु उक्तलक्षणाभावान्नातिव्याप्तिः। इतरेच्छानधीनत्वांशाभावे भोजनादावतिव्याप्तिरिति तन्निवेशः। सुखं च द्विविधं वैषयिकं मानोरथिकं चेति। तत्राद्ये स्रक्चन्दनवनितादिसंयोगः निमित्तम्। मानो-

---

(अनुवृत्तः) ज्ञानविषयत्वं नास्तीति अव्याप्तिवारणाय तादृशवेदनाविषयतावच्छेदकजातिमत्त्वमिति लक्षणपरिष्कारस्य आवश्यकत्वेन तेनैव पूर्वोक्तसकलदोषवारणसंभवात् लक्षणान्तरकरणप्रयासः व्यर्थः। दुःखाभावस्य अनुकूलवेदनीयत्वेऽपि तादृशवेदनीयतावच्छेदकसुखत्वरूपजातिमत्त्वाभावात् न तत्रातिव्याप्तिः। इतरेच्छानधीनेच्छाविषयत्वस्य लक्षणत्वेऽपि दुःखाभावे अतिव्याप्तिः। तथा स्थितप्रज्ञीयेच्छाविषयत्वस्य सुखेऽभावात् तदीयसुखे अव्याप्तिश्च "सुखेषु विगतस्पृहः" इति स्मृतेः। एवं साधुजनसमवेतसुखेषु दुःखेषु च इतरेच्छानधीनखलीयेच्छानिरूपितयोः अविषयत्वविषयत्वयोः क्रमेण सत्त्वेनाऽव्याप्त्यतिव्याप्ती। अतस्तद्वारणाय जातिघटितलक्षणकरणम् आवश्यकम्। न चैवमपि अनुकूलवेदनीयतावच्छेदकत्वं सुखत्वस्य न संभवति, शत्रुसुखेऽनुकूलवेदनीयतयाः अभावात् इति वाच्यम्। अनुकूलवेदनायां स्ववृत्तित्वप्रकारकत्वविशेषणदानेनादोषात्। मूलस्थषष्ठ्यन्तसर्वपदस्याऽस्मिन्नेवार्थे तात्पर्यात्। इच्छाघटितलक्षणेऽपि निरुक्तरीत्या जातिघटितपरिष्कारस्य आवश्यकतया शत्रुसुखे तादृशेच्छाविषयतायाः अभावेन सुखत्वं तत्रातिप्रसक्तमिति इतरेच्छानधीनेच्छायां स्ववृत्तित्वप्रकारकत्वरूपविशेषणदानमावश्यकम्। अत एव "सुखं दुःखाभावश्च पुरुषार्थः संभवति। यत् ज्ञातं सत् स्ववृत्तितयेष्यते स पुरुषार्थ इति तल्लक्षणात्। इतरेच्छानधीनेच्छाविषयत्वं फलितोऽर्थः" इतीच्छाग्रन्थे मुक्तावली। न च "सुख्यहम् इत्याद्यनुव्यवसायगम्यं सुखत्वादिकमेव लक्षणम्। यथाश्रुतं तु स्वरूपकथनमिति द्रष्टव्यम्" इति दीपिकाविरोध इति वाच्यम्। एतादृशगुरुतरपरिष्कारं विनैव सुलभतया लक्षणान्तरं संभवतीति दर्शन एव दीपिकाकृतां तात्पर्यात्। वस्तुत एकलक्षणस्य लक्षणान्तरादूषकत्वम्। अन्यथा ज्ञानाधिकरणत्वरूपात्मलक्षणस्य इच्छाधिकरणत्वरूपलक्षणान्तरसत्त्वेन दुष्टत्वापत्तेः। एवमेव प्रतिकूलवेदनीयतावच्छेदकजातिमत्त्वं दुःखलक्षणं निर्दुष्टमिति वेदितव्यम्।

अप्रमेति। भ्रमजन्यत्वे सति स्मृतित्वमयथार्थस्मृतेर्लक्षणम्। दलप्रयोजनादिकं पूर्ववत्।

सर्वेषामनुकूलतया वेदनीयं सुखम्।

सर्वेषामिति। षष्ठ्याः समवेतत्वं, तृतीयायाः प्रकारकत्वं, विद्धातोः ज्ञानं, प्रत्ययस्य विषयत्वं चार्थः। तथाच सर्वजीवसमवेतानुकूलत्वप्रकारकज्ञानविषयत्वं सुखस्य लक्षणम्। अत्र विषयत्वं विशेष्यतारूपम्। नोचेत् प्रकारतामादाय अनुकूलत्वादावतिव्याप्तिः। सर्वपदाभावे केषांचित् घटो मदनुकूलः इत्यादि ज्ञानसत्त्वात् घटादावतिव्याप्तिः। तदुपादाने तु सर्वेषां घटो मदनुकूलः इति ज्ञानाभावात् नातिव्याप्तेः।

नन्वेवमपि वैषयिके सुखे विरक्तानां द्वेषदर्शनात् वैरिणां सुखे चाविवेकिनां द्वेषदर्शनाच्च सर्वानुकूलत्वप्रकारकज्ञानविषयत्वाभावात् तत्राव्याप्तिरिति चेत्, न; इतरेच्छानधीनेच्छाविषयत्वं सुखस्य निर्दुष्टं लक्षणम्।[१]

(अनुवृत्तः) यदि च 'चैत्रमैत्रौ भ्रातरौ, तत्र चैत्रो ज्येष्ठः, मैत्रः कनिष्ठः' इति प्रथमं देवदत्तस्य प्रमानुभवः, तदनन्तरं तस्यैव कालान्तरे दोषविशेषात् उद्बोधकसामग्रीदौर्बल्याद्वा भ्रमस्मृतिः जायते 'मैत्रो ज्येष्ठः, चैत्रस्तु कनिष्ठः' इति, तादृश्यां प्रमानुभवजन्यभ्रमस्मृतौ उक्तलक्षणस्य अतिव्याप्तिः। एवं प्रथमम् 'मैत्रो ज्येष्ठः चैत्रः कनिष्ठः' इति भ्रमानुभवः, तदनन्तरं कालान्तरे किंचित्सहकारिवशात् अनुभवविपरीता यथार्थस्मृतिः जायते 'चैत्रो ज्येष्ठः, मैत्रः कनिष्ठः' इति, तादृशयथार्थस्मृतौ अयथार्थानुभवजन्यायामव्याप्तिश्च। एवमेव वक्ष्यमाणयथार्थस्मृतिलक्षणस्यापि पूर्वोक्तस्थलयोः अव्याप्त्यतिव्याप्ती बोध्ये। एवं यथार्थानुभवाज्जायमानस्य भ्रमस्य स्मृतिरूपस्यापि सर्वथाऽयथार्थतया उक्तलक्षणयोरलक्षणत्वमेवेति विभाव्यते; तर्हि तद्वति तत्प्रकारकत्वे सति अनुभवजन्यज्ञानत्वं यथार्थस्मृतिलक्षणम्, तदभाववति तत्प्रकारकत्वे सति अनुभवजन्यज्ञानत्वम् अयथार्थस्मृतिलक्षणमित्येव सुवचम्।

१. इदमत्रावधेयम्—यज्ञाद्यनुष्ठानजन्यस्वर्गस्य सुखरूपस्य, ईश्वरध्यानजन्यसुखविशेषस्य, काव्यरसास्वादजन्यसुखविशेषस्य च वैषयिकसुखात् विलक्षणत्वेन अवश्याभ्युपगन्तव्यतया तेषां सुखविशेषाणां सर्वजीवीयानुकूलत्वप्रकारक-



लोके सुखेच्छैव प्रथममुत्पद्यते तत्साधनतया धनभोजनधर्मादीच्छाः। अतः सुखेच्छाधीनत्वात् साधनेच्छाः सर्वा अपि इतरेच्छाधीनाः। सुखेच्छा तु नैवेतरेच्छाजन्येति इतरेच्छानधीनेच्छाविषयत्वं सुख इति समन्वयः। सुखातिरिक्तेषु उक्तलक्षणाभावान्नातिव्याप्तिः। इतरेच्छानधीनत्वांशाभावे भोजनादावतिव्याप्तिरिति तन्निवेशः। सुखं च द्विविधं वैषयिकं नानोरथिकं चेति। तत्राद्ये स्रक्चन्दनवनितादिसंयोगः निमित्तम्। मानो-

(अनुवृत्तः) ज्ञानविषयत्वं नास्तीति अव्याप्तिवारणाय तादृशवेदनाविषयतावच्छेदकजातिमत्त्वमिति लक्षणपरिष्कारस्य आवश्यकत्वेन तेनैव पूर्वोक्तसकलदोषवारणसंभवात् लक्षणान्तरकरणप्रयासः व्यर्थः। दुःखाभावस्य अनुकूलवेदनीयत्वेऽपि तादृशवेदनीयतावच्छेदकसुखत्वरूपजातिमत्त्वाभावात् न तत्रातिव्याप्तिः। इतरेच्छानधीनेच्छाविषयत्वस्य लक्षणत्वेऽपि दुःखाभावे अतिव्याप्तिः। तथा स्थितप्रज्ञीयेच्छाविषयत्वस्य सुखेऽभावात् तदीयसुखे अव्याप्तिश्च "सुखेषु विगतस्पृहः" इति स्मृतेः। एवं साधुजनसमवेतसुखेषु दुःखेषु च इतरेच्छानधीनखलीयेच्छानिरूपितयोः अविषयत्वविषयत्वयोः क्रमेण सत्त्वेनाऽव्याप्त्यतिव्याप्ती। अतस्तद्वारणाय जातिघटितलक्षणकरणम् आवश्यकम्। न चैवमपि अनुकूलवेदनीयतावच्छेदकत्वं सुखत्वस्य न संभवति, शत्रुसुखेऽनुकूलवेदनीयतायाः अभावात् इति वाच्यम्। अनुकूलवेदनायां स्ववृत्तित्वप्रकारकत्वविशेषणदानेनादोषात्। मूलस्थषष्ठ्यन्तसर्वपदस्याऽस्मिन्नेवार्थे तात्पर्यात्। इच्छाघटितलक्षणेऽपि निरुक्तरीत्या जातिघटितपरिष्कारस्य आवश्यकतया शत्रुसुखे तादृशेच्छाविषयतायाः अभावेन सुखत्वं तत्रातिप्रसक्तमिति इतरेच्छानधीनेच्छायां स्ववृत्तित्वप्रकारकत्वरूपविशेषणदानमावश्यकम्। अत एव "सुखं दुःखाभावश्च पुरुषार्थः संभवति। यत् ज्ञातं सत् स्ववृत्तितयेष्यते स पुरुषार्थ इति तल्लक्षणात्। इतरेच्छानधीनेच्छाविषयत्वं फलितोऽर्थः" इतीच्छाग्रन्थे मुक्तावली। न च "सुख्यहम् इत्याद्यनुव्यवसायगम्यं सुखत्वादिकमेव लक्षणम्। यथाश्रुतं तु स्वरूपकथनमिति द्रष्टव्यम्" इति दीपिकाविरोध इति वाच्यम्। एतादृशगुरुतरपरिष्कारं विनैव सुलभतया लक्षणान्तरं संभवतीति दर्शन एव दीपिकाकृतां तात्पर्यात्। वस्तुत एकलक्षणस्य लक्षणान्तरादूषकत्वम्। अन्यथा ज्ञानाधिकरणत्वरूपात्मलक्षणस्य इच्छाधिकरणत्वरूपलक्षणान्तरसत्त्वेन दुष्टत्वापत्तेः। एवमेव प्रतिकूलवेदनीयतावच्छेदकजातिमत्त्वं दुःखलक्षणं निर्दुष्टमिति वेदितव्यम्।

रथिके च ज्ञानं निमित्तम्। उभयत्रात्ममनःसंयोगः असमवायी। आत्मा समवायी। धर्मस्तु सुखसंपादकः। सुखं सर्वमनित्यं द्विक्षणावस्थायि च, नित्यसुखानङ्गीकारात्। ईश्वरस्य कर्तृत्वग्राहकमानात् तस्य नित्यज्ञानादिसिद्धावपि तस्य नित्यसुखाद्यसिद्धिरिति प्राञ्चः। "नित्यं विज्ञानमानन्दं ब्रह्म" इति श्रुत्या ईश्वरे नित्यसुखसिद्धिरिति तु नव्याः इत्यन्यत्र विस्तरः।

सर्वेषां प्रतिकूलतया वेदनीयं दुःखम्।

दुःखस्वरूपमाह—सर्वेषामिति। सर्वजीवसमवेतप्रतिकूलत्वप्रकारकज्ञानविषयत्वं दुःखलक्षणम्। दुःखं मत्प्रतिकूलमिति ज्ञाने दुःखस्य विशेष्यतया लक्षणसमन्वयः। विरक्तानां वैषयिकसुखे प्रतिकूलत्वज्ञानात् तत्रातिव्याप्तिवारणाय सर्वपदम्। अत्रापि पूर्ववत् इतरद्वेषानधीनद्वेषविषयत्वमिति परिष्करणीयम्। नो चेत् शत्रुसुखे सर्पव्याघ्रादौ च सर्वसमवेतप्रतिकूलत्वप्रकारकज्ञानविशेष्यतासत्त्वादतिप्रसंगः। प्रथमं दुःखे द्वेषः, ततः परं तत्साधनसर्पादौ द्वेषः इति दुःखसाधनविषयकद्वेषाणां दुःखद्वेषाधीनतया नातिव्याप्तिः। दुःखद्वेषस्तु इदं दुःखमिति ज्ञानादेवोत्पद्यते इति तत्र इतरद्वेषानधीनता। शत्रुसुखेऽपि दुःखद्वेषानधीनद्वेषविषयत्वं नास्तीति न दोषः। द्वेषविषयत्वमात्रोक्तौ सर्पादावतिव्याप्तिः। अतः इतरद्वेषानधीनत्वम्। तथाच सर्पद्वेषः दुःखद्वेषाधीन इति नातिव्याप्तिः। सुखदुःखयोः फलरूपतया सर्वत्र फलेच्छाद्वेषौ फलज्ञानजन्यौ, उपायेच्छाद्वेषौ प्रति फलेच्छाद्वेषौ कारणमिति तत्त्वम्। दुःखमपि वैषयिकं मानसिकं च इति द्विविधम्। वैषयिके कण्टकादिसंयोगो निमित्तम्। मानसिके प्रियवस्तुनाशचिन्तितालाभव्याघ्रसर्पाततताप्यादिज्ञानं निमित्तम्। सर्वत्राधर्मः प्रयोजकः। सुखदुःखादिप्रयोजकादृष्टस्य भोग एव मुख्यं फलम्, न तु भुज्यमाने सुखदुःखे। तथा सति तयोः भोगस्य निर्हेतुकत्वापातात्। भुज्यमाने सुखदुःखे जनयित्वैव अदृष्टनाशात्। न स्याच्च भोगस्यावश्यकता। अत एव न्यायवार्तिकटीकायां वाचस्पतिमिश्राः "सुखदुःखबुद्ध्युत्पाद एव च धर्माधर्मयोरुपयोगः। न तु सुखदुःखोत्पादे" इति।



इच्छा कामः। क्रोधः द्वेषः। कृतिः प्रयत्नः।

प्रयत्नं प्रतीच्छा कारणम्। इच्छां प्रति तु ज्ञानं कारणम्। जानाति, इच्छति, करोति, इति क्रमात्। परन्तु न सर्वं ज्ञानं इच्छाजनकम्, दुःखज्ञानात् दुःखे तदुपाये च द्वेषस्यैव जननात्। तस्मात् सुखं दुःखं वा जानाति, इच्छति, द्वेष्टि वा, तदनन्तरं तदनुसारेण यतते, इति वक्तव्यम्। तथाच ज्ञानेच्छाद्वेषप्रयत्नानां सविषयकपदार्थानां मध्ये ज्ञानस्यैवेतरकारणतया तत् प्रथमं निरूप्य तस्य च सुखविषयकत्वे इच्छाजनकत्वं, दुःखविषयकत्वे द्वेषजनकत्वमिति अनुभवात्, ज्ञानानन्तरं सुखदुःखे च निरूप्य, तद्ज्ञानजन्येच्छाद्वेषौ, तत्कार्यभूतप्रयत्नं च क्रमशो निरूपयति—इच्छेत्यादिना। अहमिच्छामि, अहं द्वेष्मि, अहं करोमीतिप्रतीतिविषयतावच्छेदकानि इच्छात्वद्वेषत्वकृतित्वानि लक्षणानि। कामः क्रोधः कृतिरिति निर्वचनमात्रम्। जानाति इच्छति द्वेष्टि वा, करोति निवर्तते वा, इति क्रमात् ज्ञानजन्यत्वे सति कृतिजनकत्वमिच्छायाः, ज्ञानजन्यत्वे सति निवृत्तिजनकत्वं द्वेषस्य, इच्छाजन्यत्वे सति गुणत्वं प्रयत्नस्य च लक्षणं बोध्यम्॥ कृतिमत्त्वं कर्तृत्वम्। अतः सर्वदा कर्तरि कृतिः विशेषणमिति विषयतासंबन्धेन कार्यमात्रं प्रति कारणतावच्छेदकमित्यपि कृतिलक्षणम्, कार्यमात्रं प्रति कर्तुः कारणत्वात्। एवम् आख्यातशक्यतावच्छेदकधर्मवत्त्वमपि कृतिलक्षणं भवति। लाघवेन आख्यातमात्रस्य शक्तिः कृतित्वावच्छिन्ने एवेति कृतित्वे आख्यातशक्यतावच्छेदकत्वमिति समन्वयः। यद्यपि भाष्यादौ कामस्येच्छाप्रभेदत्वमभिहितम्, तथापि स्वर्गकाम इत्यादौ इच्छामात्रवाचकत्वावगमात् इत्थमुक्तम्। यद्वा कामोऽपि इच्छाविशेष एव, न गुणान्तरमिति ज्ञापनाय इच्छा काम इत्युक्तम्। इयं चेच्छा द्विविधा। एका उपायविषयिणी समानधर्मितावच्छेदककेष्टसाधनताज्ञानसाध्या। अपरा तु फलविषयिणी फलज्ञानसाध्या। अत्र "कामोऽभिलाषो रागः संकल्पः कारुण्यं वैराग्यमुपधा भावः इत्येवमादयः इच्छाभेदाः" इति भाष्यम्। तत्र स्त्रीविषयकेच्छा कामः। अभ्यवहारेच्छा अभिलाषः। पुनः पुनः विषयानुरंजनेच्छा रागः। अनासन्नक्रियेच्छा संकल्पः। स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा

कारुण्यम्। दोषदर्शनात् विषयपरित्यागेच्छा वैराग्यम्। परवञ्चनेच्छा उपधा कपटपदाभिधेया। अन्तर्निगूढेच्छा भावः। चिकीर्षाजिहीर्षादयोऽपि इच्छाभेदा भवन्ति। चिकीर्षा कर्तुमिच्छा। जिहीर्षा हर्तुमिच्छा। आदिना परद्रव्यादानेच्छा स्पृहा; अवश्यकर्तव्ये त्यागे स्वद्रव्यापरित्यागेच्छा कार्पण्यम्; अन्यायेन परद्रव्यादानेच्छा लोभः; इत्यादेः परिग्रहः। अत्र च ज्ञानं निमित्तकारणम्, आत्ममनःसंयोगोऽसमवायी, आत्मा च समवायी, इति बोध्यम्। भाष्ये "द्रोहः क्रोधो मन्युरक्षमामर्षः" इति द्वेषभेदाः उक्ताः। तत्र अलक्षितविकारः अपकारपर्यवसायी द्रोहः; आशुतरविनाशी लक्षितविकारः क्रोधः धीरानुविद्धः अपकारपर्यवसायी; अपकारासमर्थस्य अपकारिणि निगूढो द्वेषः मन्युः; परापकारासहनमक्षमा; स्वपरिभवाक्षमो द्वेषोऽमर्षः इत्याद्यूह्यम्। आदिना ईर्ष्यासूयादयो ग्राह्याः। अत्र च दुःखं तत्स्मृतिर्वा निमित्तकारणम्। शेषं पूर्ववत्। "प्रयत्नः संरंभः उत्साहः इति पर्यायाः" इति च भाष्यम्। स द्विविधः। जीवनपूर्वकः इच्छाद्वेषपूर्वकश्च इति। सुप्तस्य प्राणापानादिप्रेरकः प्रबोधकाले मनसः इन्द्रियान्तरप्राप्तिहेतुश्च प्रथमः। प्राणक्रिया असाधारणनिमित्तजन्या, क्रियात्वात्, इत्यनुमानं तत्र मानम्। इच्छापूर्वकः द्वितीयः। घटपटादिनिर्माणानयनादिषु करचरणादिव्यापारहेतुः। द्वेषपूर्वकः शत्रुवधादौ।

**विहितकर्मजन्यः धर्मः।**

धर्मलक्षणमाह—विहितेति। विहितकर्मजन्यत्वं धर्मस्य लक्षणम्। दर्शपूर्णमासादिविहितकर्मजन्यत्वस्य धर्मे सत्त्वात्समन्वयः। विहितकर्मप्रत्यक्षे विहितकर्मध्वंसे चातिव्याप्तिवारणाय अतीन्द्रियगुणत्वमपि लक्षणे देयम्[१]। ध्वंसे गुणत्वाभावात् प्रदक्षिणनमस्कारादिविहितकर्मविषयकप्रत्यक्षे अतीन्द्रियत्वाभावाच्च नातिव्याप्तिः।

---

१ वस्तुतस्तु विहितकर्मणां शरीरस्थत्वेन अदृष्टस्यात्मगुणत्वेन च वैयधिकरण्यात् विहितकर्मजन्यत्वं तादृशकर्मानुकूलकृतिजन्यत्वमेव वाच्यम्। एवं च जैमीय-



**निषिद्धकर्मजन्योऽधर्मः।**

अधर्मलक्षणमाह—निषिद्धेति। अत्रापि पूर्ववत् निषिद्धकर्मजन्यत्वे सति अतीन्द्रियगुणत्वं पर्यवसितं लक्षणम्। अत्र यद्यपि अदृष्टत्वेन धर्माधर्मयोः ऐक्यम्। तथापि तयोः परस्परविरुद्धतया अत्यन्तं स्पृहणीयास्पृहणीयसुखदुःखकारणतया च विहितनिषिद्धकर्मजन्यतया चैवं पृथग्विभागः भाष्यकारैः कृतः। न च धर्माभाव एवाधर्मोऽस्तु इति शंक्यम्। निन्दितकर्मजन्मनः नरकादिप्राप्तिहेतोः भावरूपगुणस्यैव अधर्मत्वात्। ततश्च विहितनिषिद्धक्रियाजन्यतावच्छेदकसुखदुःखासाधारणकारणतावच्छेदकजातिमन्तौ धर्माधर्माविति फलितम्। मिथ्याज्ञानजन्यवासनाजन्यतावच्छेदकजातिस्तु उभयसाधारणी अदृष्टस्वरूपा ज्ञेया। एतदुभयमप्यतीन्द्रियम्। न च धर्माधर्मयोः सत्त्वे मानाभावः। आशुविनाशियागनिष्ठा वेदबोधिता कालान्तरभाविस्वर्गसाधनता सद्वारा, साक्षादसाधनतात्वे सति साधनतात्वात्, इत्यनुमानस्यैव प्रमाणत्वात्। ननु यागध्वंस एव तद्व्यापारोऽस्तु। नचैवं सति यागस्य स्वर्गप्रतिबन्धकत्वापत्तिः, कारणीभूताभावप्रतियोगित्वस्यैव प्रतिबन्धकत्वात्, स्वर्गकारणीभूतयागध्वंसरूपाभावप्रतियोगित्वस्य यागे सत्त्वात्। अतएव च समाप्तिं प्रति विघ्नध्वंसः कारणम्, विघ्नः प्रतिबन्धकः, इत्युच्यते। तच्च यागीयप्रतिबन्धकत्वं श्रुतिविरुद्धमिति वाच्यम्। प्रतिबन्धकलक्षणे कारणीभूताभावस्य संसर्गाभावत्वेनैव ग्रहणात्। अन्यथा घटध्वंसं प्रति कारणीभूतस्य कपालध्वंसस्य प्रतियोगिनः कपालस्य घटध्वंसं प्रति प्रतिबन्धकत्वापत्तिः। समाप्तिं प्रति विघ्नध्वंसस्य संसर्गाभावत्वेनैव कारणत्वम्। घटध्वंसं प्रति कपालध्वंसस्य ध्वंसत्वेनैव कारणत्वम्, न तु संसर्गा-

---

(अनुवृत्तः) यागानुकूलकृत्या मैत्रीयात्मनि अदृष्टोत्पत्तिवारणाय समवायेन अदृष्टोत्पत्तिं प्रति समवायेन तादृशकृतेः कारणत्वं वक्तव्यम्। तथा च तादृशकृतिनिष्ठसमवायसंबन्धावच्छिन्नजनकतानिरूपितसमवायसंबन्धावच्छिन्नजन्यताश्रयत्वमेवादृष्टत्वमिति लक्षणपरिष्कारात् विहितकर्मजन्यप्रत्यक्षे विहितकर्मध्वंसे च नातिव्याप्तिः। कर्मणः स्वप्रत्यक्षं प्रति स्वध्वंसं प्रति च क्रमेण विषयतासंबन्धेन प्रतियोगितासंबन्धेन च कारणत्वमिति अतीन्द्रियगुणत्वदलोपादानं व्यर्थमिति बोध्यम्। एवमधर्मलक्षणेऽपि।

भावत्वेन । एवं चात्रापि यागध्वंसस्य ध्वंसत्वेनैव कारणत्वमित्यदोषादिति चेत्, न; विहितकर्मध्वंसत्वे तस्य कीर्तनादिनाश्यत्वानुपपत्तेः, ध्वंसस्य ध्वंसानङ्गीकारात् । न च "धर्मः क्षरति कीर्तनात्" इत्यस्य विहितक्रिया कीर्तनात् फलं नोत्पादयति, इत्यर्थकतया कीर्तनस्य प्रतिबन्धकत्वान्न दोष इति वाच्यम् । चिरातीतेन कीर्तनादिना कालान्तरभाविस्वर्गफलप्रतिबन्धायोगात् । एवं प्रायश्चित्तादिनाश्यत्वेन दुरितापूर्वसिद्धिः । ध्वंसस्य निषिद्धकर्मव्यापारत्वे कृतप्रायश्चित्तस्यापि नरकोत्पादप्रसंगः । एवं तत्त्वज्ञाननाश्यतयाप्यदृष्टसिद्धिरित्याद्यूह्यम् । गङ्गास्नानादौ देवताप्रीतेरभावेन, स्वमते ईश्वरे प्रीतेरभावेन च देवताप्रीतेः द्वारत्वमत्यन्तमसंभावितमिति दिक् ।

अत्र विधिनिषेधयोः नराधिकारिकत्वात् विहितनिन्दितकर्माणि श्रेयस्कामैरवश्यमवगन्तव्यानि । तदानीमेवेष्टप्राप्तिः अनिष्टपरिहारश्च संपादयितुं शक्यते । "सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः । सुखं च न विना धर्मात्तस्माद्धर्मपरो भवेत् ॥" इत्याचार्यवाग्भटवचनम् । सर्वे सुखार्थिन एव । न कोऽपि दुःखार्थी । भारापगमे सुखी संवृत्तोऽहमित्यनुभवेन दुःखध्वंसोऽपि सुखत्वेनोपचर्यते । "धर्मज्ञसमयः प्रमाणम्, वेदाश्च" इत्यापस्तंबवचनात्, "यमार्याः क्रियमाणं तु शंसन्त्यागमवेदिनः । स धर्मो यं विगर्हन्ते तमधर्मं प्रचक्षते ॥" इत्यादिविश्वामित्रादिमहर्षिवचनाच्च श्रुतिस्मृतिसदाचारादिभिः धर्मं सम्यगवगम्य सर्वैः सत्कर्मनिरतैर्भवितव्यम् । एवं सत्कर्मजन्यधर्मविशेषात् शास्त्रे प्रवृत्तिः । ततः पदार्थतत्त्वज्ञानात् आत्मस्वरूपज्ञानम् । ततो दुःखध्वंसः इति धर्माधर्मनिरूपणप्रसंगात् संक्षेपतः किंचिदुक्तम् ।

**बुद्ध्यादयोऽष्टावात्ममात्रवृत्तिगुणाः । बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च । नित्या ईश्वरस्य । अनित्या जीवस्य ।**

बुद्ध्यादीनामाश्रयमाह—आत्ममात्रवृत्तिगुणा इति । आत्मेतरावृत्तिगुणा इति तदर्थः । आत्मवृत्तित्वांशस्य न विवक्षा, सुखदुःखद्वेषधर्माधर्माणाम् ईश्वरेऽनङ्गीकारात् । जीवमात्रनिष्ठानां कर्माधीनानां



तेषामनित्यत्वमेव । ज्ञानेच्छाकृतीनाम् ईश्वरीयाणां नित्यत्वं जीवीयानामनित्यत्वमिति बोधनायाह—बुद्धीच्छाप्रयत्ना इति । ईश्वरस्येति । ईश्वरस्य शरीराभावात् तदीयबुद्ध्यादेः शरीरनिरपेक्षतया सर्वप्रपंचविधायकत्वम् तस्य बुद्ध्यादीनां सर्वविषयकत्वम्, "यो रुद्रो विश्वा भुवनाविवेश", "ईशानः सर्वविद्यानाम्", "यः सर्वज्ञः सर्ववित्" इत्यादिश्रुतेः । विनिगमनाविरहात् बुद्धीच्छाप्रयत्नानां च सर्वविषयकत्वम् । जीववर्तिनां नाशप्रतीतिबलात् ईश्वरभिन्नविभुविशेषगुणानां स्वोत्तरोत्पन्नगुणनाश्यत्वनियमाच्चानित्यत्वद्विक्षणावस्थायित्वयोः सिद्धावपि ईश्वरवर्तिनां तेषाम् अनित्यत्वसाधकमानाभावात् नित्यत्वमेवेति भावः । मतान्तरे चेश्वरस्य नित्यसुखमप्यङ्गीकुर्वन्ति ।

**संस्कारः त्रिविधः वेगो भावना स्थितिस्थापकश्चेति ।**

अथ संस्कारविभागमाह—संस्कार इति । संस्कारत्वजातिमत्त्वं संस्कारस्य लक्षणम् ।

**वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः ।**

वेगमाह—पृथिव्यादिति । इष्वादिषु जायमाना या प्रयत्नवदात्मसंयोगजन्या प्रथमक्रिया तज्जन्यः द्वितीयक्रियाजनकः मूर्तवृत्तिः वेगः । नैतल्लक्षणम्, किंतु स्वरूपकीर्तनम् । लक्षणं तु मनोवृत्तित्वमात्रमेव, इतरांशस्य लक्षणप्रवेशे प्रयोजनविरहात् ।[1] वेगश्च कारणगुणाज्जायते । क्वचित्कर्मणोऽपि । कर्मजनकश्च । विनश्यति चायं क्वचित् विलक्षणसंयोगात्, क्वचिदाश्रयनाशात्, क्वचित् स्वजन्यकर्मणश्च । न च क्रियातिरिक्ते वेगे मानाभावः, वेगेन चलतीति प्रत्यक्षस्यैव प्रमाणत्वात् । ननु मूर्तेषु दिक्कृतविशेषणतासंबन्धेन सर्वस्यापि प्रपंचस्य वर्तमानतया मनो-

---

१ ननु मनोवृत्तित्वस्य संख्यादावपि सत्त्वादतिव्याप्तिरिति चेत्, न; अमूर्तावृत्तित्वस्यापि विशेषणात् । एवं च रूपादौ अतिव्याप्तिवारणाय विशेष्यदलम् । वस्तुतस्तु क्रियायां परत्वापरत्वयोश्चैतल्लक्षणमतिव्याप्तम् "क्षितिर्जलं तथा तेजः पवनो मन एव च । परापरत्वमूर्तत्वक्रियावेगाश्रया अमी ॥" इति वचनात् । इष्वादिगतवेगे मनस्समवेतत्वाभावेन अव्याप्तेश्च । तस्मात् प्रत्यक्षसिद्धवेगत्वजातिमत्त्वं वेगलक्षणमिति बोध्यम् ।

निरूपितवृत्तित्वं घटादिष्विति तत्रातिव्याप्तिरिति चेत्, न; मनोनिरूपितवृत्तित्वे समवायसंबन्धावच्छिन्नत्वनिवेशात्, घटादीनां समवायेन तत्र वृत्तित्वविरहाददोषात्। ननु क्रियासंयोगादौ समवायेन मनोवृत्तित्वमिति चेत्, संस्कारत्वस्यापि लक्षणे प्रवेशात् क्रियादौ तदभावात्।

## अनुभवजन्या स्मृतिहेतुर्भावना।

"दृष्टश्रुतानुमितेष्वर्थेषु स्मृतिप्रत्यभिज्ञानहेतुः" इति भाष्यदर्शनात् अनुभव एव भावनाहेतुरित्यभिप्रायेणाह—अनुभवेति। अनुभूतमेव स्मर्यते, नाननुभूतम्। अनुभवे नष्टेऽपि कालान्तरे स्मृतिजननात् मध्ये कश्चन व्यापारः कल्प्यः। स एव भावनापदवाच्यः। अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनाया लक्षणम्। प्रथममनुभवः। तदनु भावनाख्यः संस्कारः। ततः स्मृतिरिति समन्वयः। अनुभवजन्यत्वमात्रोक्तौ तद्ध्वंसे, स्मृतिहेतुत्वमात्रोक्तौ आत्मादौ चातिव्याप्तिः। अतो दलद्वयोपादानम्। ननु ध्वंसं प्रति प्रतियोगिनः तादात्म्येनैव कारणतया अनुभवनिष्ठसमवायसंबन्धावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वविवक्षणादेव ध्वंसेऽतिव्याप्तिवारणात् स्मृतिहेतुत्वदलं व्यर्थमिति चेत्, न; स्मृतिं प्रत्यनुभवस्य समवायेनैव कारणत्वात् तत्रातिव्याप्तिवारकतया सार्थक्यात्। एतेन गुणत्वदलेनैव ध्वंसेऽतिव्याप्त्यभावात् स्मृतिहेतुत्वदलं किमर्थमिति शंकानवकाशः। स्मृतावतिव्याप्तिवारकतया सार्थक्यमिति पूर्वमुक्तत्वात्। न च विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वात् विशेषणज्ञानात्मकदण्डानुभवजन्यत्वस्य दण्डी पुरुष इति स्मृतिकारणत्वस्य च दण्डी पुरुष इति विशिष्टबुद्धौ सत्त्वात् अतिव्याप्तिरिति वाच्यम्। यतः अत्रानुभवजन्यत्वं अनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वरूपम्, नतु अनुभवनिष्ठकारणतानिरूपितकार्यताश्रयत्वम्। तथा च विशिष्टबुद्धिं प्रति विशेषणानुभवस्यापि ज्ञानत्वेनैव कारणतया ज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्यैव विशिष्टबुद्धौ सत्त्वेन अनुभवत्वावच्छिन्नकारणत्वाभावान्नातिव्याप्तिः। विशेषणानुभवादिव विशेषणस्मरणादपि दण्डी पुरुष इत्यादिविशिष्टज्ञानस्योदयात् स्मृत्यनुभवसाधारणज्ञानत्वेनैव तत्र कारणता।



अत्र तु अनुभवत्वेनैवेति विशेषः। वस्तुतस्तु स्मृतेरपि स्मृत्युत्पत्त्या स्मृतेरपि भावनोत्पत्त्या च स्मृतिजनकत्वं स्मृत्यन्तर इति स्मृतावेवातिव्याप्तिः। स्मृतिजन्यत्वं च भावनाविशेषे संभवतीति अव्याप्तिश्चेति पूर्वोक्तानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य लक्षणत्वं नाङ्गीकर्तुं शक्यते। अतः स्मृत्यनुभवसाधारण्येन ज्ञानत्वेनैव कारणत्वं वक्तव्यम्। एवं च ज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वमित्युक्ते इच्छादिकं प्रत्यपि ज्ञानस्य कारणतया तत्रातिव्याप्तिवारणाय स्मृतिहेतुत्वदलम्। स्मृतिसाधारणस्मरणकालादावतिव्याप्तिवारणाय स्मृतित्वावच्छिन्नजन्यतानिरूपितजनकताश्रयत्वं वक्तव्यम्। तथापि पूर्वोक्तरीत्या स्मृतेरपि स्मृतिसंभवात् पुनरपि तस्य संस्कारद्वारा स्मृतिहेतुत्वात् स्मृतावतिव्याप्तिस्तदवस्थैव। तदर्थं ज्ञानस्याव्यवहितपूर्वक्षणावच्छिन्नजनकत्वं निवेशनीयम्। ज्ञानस्य स्मृतिं प्रति संस्कारद्वारैव कारणतया संस्कारं प्रत्येवाव्यवहितकारणतया न दोषः। एतदर्थलाभायैव ग्रंथकारः अनुभवजन्या इति निर्दिष्टवान्।[1] अनुभवस्य प्रयोजकत्वरूपकारणतानिरासायेति हृदयम्।

---

[1] अत्रेदं तत्त्वम्। अनुभवजन्येत्यस्य अनुभवत्वावच्छिन्नसमवायघटितसामानाधिकरण्यसंबन्धावच्छिन्नव्यापारानवच्छिन्नकारणतानिरूपितकार्यतावच्छेदकरूपजातिविशेषवत्त्वम् अर्थः। सा च जातिः भावनात्वमेव। तद्वत्त्वं च भावनायाः लक्षणम्। संबन्धविशेषावच्छिन्नत्वनिवेशात् अनुभवध्वंसे, व्यापारानवच्छिन्नत्वनिवेशात् स्मृतौ च नातिव्याप्तिः। अथैवं परिष्कारे विशेषणदलेनैव सकलदोषवारणसंभवात् स्मृतिजनकत्वदलस्य वैयर्थ्यापत्तिरिति चेत्, इष्टापत्तेः। ननु निरुक्तकार्यतावच्छेदकत्वं भावनात्वजातेः न संभवति अनुभवस्येव स्मृतेरपि भावनाजनकतया भावनात्वम् अनुभवत्वावच्छिन्नकारणतानिरूपितकार्यतातिप्रसक्तत्वान्न तदवच्छेदकम्, अन्यूनानतिरिक्तवृत्तिधर्मस्यैव कार्यतावच्छेदकत्वात्। तथा च निरुक्तलक्षणस्य असंभवः इत्यत आह—स्मृतिहेतुरिति। स्मृतित्वावच्छिन्नसमवायघटितसामानाधिकरण्यसंबन्धावच्छिन्नकार्यतानिरूपितव्यापारानवच्छिन्नकारणतावच्छेदकजातिमत्त्वं तदर्थः। सा च जातिः भावनात्वमिति लक्षणसमन्वयः। कार्यतायां समवायावच्छिन्नत्वनिवेशात् कालिकादिसंबन्धमादाय घटादौ, कारणतायां

यद्वा समवायघटितसामानाधिकरण्यसंबन्धावच्छिन्नस्मृतित्वावच्छिन्न-जन्यतानिरूपितजनकतावच्छेदकजातिमत्त्वमिति जातिघटितलक्षणपरिष्कारेण दोषाः अपनेतव्याः। एवं च पूर्वोक्तभाष्यवचनमपि संगतं भवति। अतीन्द्रियश्चायं गुणः स्मृतिरूपस्वीयफलेनैवानुमेयः। अत एव रघुवंशे "फलानुमेयाः प्रारंभाः संस्काराः प्राक्तना इव।" इति महाकविः कालिदासः।

**अन्यथाकृतस्य पुनः तादवस्थ्यसंपादकः स्थितिस्थापकः कटादिपृथिवीमात्रवृत्तिः।**

स्थितिस्थापकस्य लक्षणमाह—अन्यथेति। स्थितिस्थापकशब्दस्य स्थितेः पूर्वकालसम्बन्धिविलक्षणसंस्थानजातीयायाः स्थापकः पुनरुत्पत्ति-जनकः इत्यर्थः। अन्यथेत्यादिवाक्ये अन्यशब्दस्य प्रकरणात् पूर्वावस्थान-भिन्नावस्थानाश्रयत्वम्, "प्रकारवचने थाल्" इति सूत्रानुसारेण थाल्प्रत्य-यस्य प्रकारतानिरूपकत्वम्, कृञ्धातोः कृतिः, क्तप्रत्ययस्य विषयताविशिष्ट-त्वम्, षष्ठ्याः आधेयत्वं चार्थः। सा अवस्था यस्य सः तदवस्थः। तदव-स्थस्य भावः तादवस्थ्यम्। तच्च तदवस्थावत्त्वम्। "विशिष्टात् भावप्रत्ययो विशेषणमभिधत्ते" इति न्यायात् तदवस्थेति फलितोऽर्थः। तथा च पूर्वावस्थानभिन्नावस्थानाश्रयत्वप्रकारककृतिनिरूपितविषयताविशिष्टवस्तुनिष्ठ-पूर्वावस्थानसंपादकत्वं स्थितिस्थापकस्य लक्षणम्। आत्ममनोऽवृत्तिसंस्कारत्वं वा लक्षणम्। अतीन्द्रियोऽयं नित्यगतो नित्यः, अनित्यगतोऽनित्यः, कारणगुणजन्यः, क्रियाविशेषहेतुश्च। तत्र नायं साक्षात्पूर्वावस्थानसंपादकः, किं तु वेग इव कटादौ तादृशसंयोगानुकूलक्रियामुत्पादयति। सा च क्रिया

---

(अनुवृत्तः) व्यापारानवच्छिन्नत्वनिवेशात् अनुभवे स्मृतौ च नातिव्याप्तिः। स्मृतेरपि अनुभवस्येव स्मृतिजनकत्वं स्वजन्यभावनाख्यसंस्कारद्वारैव, न साक्षात् इत्यङ्गीकारात्। एवं च अनुभवजन्या स्मृतिहेतुः भावना इत्यस्य निरुक्तरीत्या लक्षणद्वयपरत्वे तात्पर्यमिति। नवीनमते द्वितीयलक्षणघटकस्मृतिपदं प्रत्यभिज्ञाया अप्युपलक्ष-णम्। अत एव "स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते।" इति कारिकावली।



विद्यमानसंयोगविशेषं नाशयित्वा पूर्वस्थितिजातीयसंयोगं जनयति इति विवेकः। वेगस्तु स्वदेशोत्तरसंयोगजनकक्रियामात्रजनक इति भेदः। स्थितिस्थापकस्याप्रत्यक्षत्वेऽपि बलादुन्नमितधनुःशाखादिक्रिया स्वाश्रयस्य यथापूर्वसंयोगजनकविलक्षणकारणवती विलक्षणक्रियात्वात् इत्यनुमानेन तत्सिद्धिः। स च सिद्ध्यन् पृथिव्यामेव सिद्ध्यति, तत्रैव तत्कार्योपलब्धेः इत्याह—कटादिपृथिवीमात्रवृत्तिरिति।[1] तालपत्रादिरचितः कटः आकुञ्चित एव रक्षितः कदाचित् प्रसारितोऽपि संस्कारवशात् पुनरपि वेष्टमान एव भवति। आदिना धनुःशाखादिपरिग्रहः।

ननु अरुच्यादीनां गुणानां पूर्वोक्तचतुर्विंशतिगुणानन्तर्भूतानाम-निरूपणात् ग्रन्थोयं न सकलगुणनिरूपकः इति चेत्, न; अरुच्यादीनाम् इष्टाभावादिष्वन्तर्भावात्। तथाहि—अरुचिरिष्टाभावः। आलस्यं यत्नाभावः। लघुत्वं गुरुत्वाभावः। काठिन्यं स्पर्शभेदः। स्नेहाभाव एव रौक्ष्यम्। रूक्षपदस्यास्निग्धपर्यायत्वदर्शनात् इति।

अथ गुणानां विशेषज्ञानार्थं किंचिदिहोच्यते। रूपादिचतुष्टयं परत्वादिपंचकं स्थितिस्थापकवेगौ चेत्येकादश अमूर्तद्रव्यावृत्तिगुणाः। मूर्तत्वं च क्रियाश्रयत्वम्, अपकृष्टपरिमाणवत्त्वम्, अविभुवृत्तिपरिमाणवत्त्वं वा। मूर्तत्वं च क्रियाजनकतावच्छेदकतया सिद्धा जातिरिति नव्याः। सर्वेष्वपि प्रकारेषु पृथिव्यप्तेजोवायुमनांसि मूर्तानि। इतराण्यमूर्तानि। शब्दादिभावनान्ताः अमूर्तवृत्तिगुणाः। मूर्तमात्रवृत्तिगुणास्तु परत्वम्, अपरत्वम्, परममहत्त्वभिन्नपरिमाणं च। अमूर्तसामान्यवृत्तिगुणः एक एव। स च परममहत्परिमाणम्। संख्यादिविभागान्ताः पंच मूर्तामूर्तोभयवृत्ति-गुणाः। गुरुत्वं विहाय संख्यादिस्नेहान्ताश्चक्षुषा त्वचा च ग्राह्या गुणाः।

---

[1] इदं च अन्यथाकृतेषु जलादिषु पूर्वावस्थानप्राप्त्यदर्शनात् तेषु तत्प्राप्त्य-नुमेयस्थितिस्थापकाख्यगुणकल्पने मानाभावः इति वदतां नव्यानां मतानुसारेण। "स्थितिस्थापकस्तु स्पर्शवद्द्रव्येषु वर्तमानः" इति भाष्यवचनं प्रमाणीकुर्वन्तः प्राचीनास्तु अयं गुणः पृथिव्यादिचतुष्टये वर्तते इत्याहुः। अतएव "स्थिति-स्थापकसंस्कारः क्षितौ, केचिच्चतुर्ष्वपि।" इति कारिकावली।

शब्दस्पर्शरूपरसगन्धाः एकैकवहिरिन्द्रियग्राह्याः। गुरुत्वादृष्टभावनास्थितिस्थापकाः अतीन्द्रियगुणाः। संयोगविभागौ द्वित्वत्रित्वादयः द्विपृथक्त्वत्रिपृथक्त्वादयश्च अनेकाश्रितगुणाः। रूपादिचतुष्टयम् एकत्वैकपृथक्त्वपरिमाणानि परत्वादिसंस्कारान्ताः एकैकद्रव्यवृत्तिगुणाः। अपाकजं रूपादिचतुष्टयम्, अपाकजं, द्रवत्वं स्नेहवेगजवेगगुरुत्वैकपृथक्त्वपरिमाणस्थितिस्थापकसंस्काराः कारणगुणजन्याः। स्वाश्रयसमवायिकारणवृत्तिस्वसजातीयगुणजन्यत्वं कारणगुणोत्पन्नत्वम्। शब्दादिनवकं भावनाख्यसंस्कारश्च विभुविशेषगुणाः अकारणगुणोत्पन्नाः। स्वाश्रयसमवायिकारणवृत्तिगुणजन्यगुणाश्रयत्वसंबन्धेन स्वविशिष्टान्यत्वं अकारणगुणोत्पन्नत्वमिति विवेकः।

॥ इति गुणपरिच्छेदः ॥

**चलनात्मकं कर्म। ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम्। अधोदेशसंयोगहेतुरपक्षेपणम्। शरीरसन्निकृष्टसंयोगहेतुराकुञ्चनम्। शरीरविप्रकृष्टसंयोगहेतुः प्रसारणम्। अन्यत्सर्वं गमनम्।**

कर्म निरूपयति——चलनेति। कर्मत्वं च संयोगविभागयोरनपेक्षकारणत्वम्। तदर्थश्च स्वपश्चाद्भाविभावासहकारेण स्वजन्यविभागाधीनसंयोगजनकत्वम्। क्रिया, क्रियातो विभागः, विभागात् पूर्वसंयोगनाशः, ततः उत्तरसंयोगोत्पत्तिः, इतिक्रममनुसृत्य लक्षणसमन्वयः। यद्वा कर्मत्वजातिमत्त्वं लक्षणम्। अथवा संयोगभिन्नत्वे सति संयोगासमवायिकारणत्वं कर्मलक्षणं बोध्यम्। चलनात्मकत्वोक्तिस्तु तादृशजातेः 'चलति' इत्यनुगतप्रतीतिसिद्धत्वस्फोरणाय।

ननु कर्म नातिरिक्तम्, संयोगविभागसन्तानस्यैव चलतीति प्रत्ययविषयत्वादिति चेत्, न; निश्चलेऽपि भूतलादौ पिपीलिकादिसंयोगविभागसन्तानसत्त्वात् चलनप्रत्ययापत्तेः। संयोगविभागादेः द्विष्ठतया तत्प्रतीतेः प्रतियोगिसापेक्षत्वात्, चलतीत्यादिप्रत्ययस्यातथात्वात्। ऊर्ध्वदेशसंयोगहेतुत्वे सति कर्मत्वमित्यादि उत्क्षेपणादीनां लक्षणम्। उत्क्षेपणादिभिन्नकर्मत्वं गमनस्य लक्षणमित्याह——अन्यत्सर्वमिति। भ्रमणरेचनस्यन्दनोर्ध्वज्वलनतिर्यक्पतननमनोन्नमनादिकं गमनमेवेत्यर्थः। न चानियतदेशसंयोगविभागकारणम् उत्क्षेपणादिकम् अपि गमनान्तर्भूतमेवास्तु, ऊर्ध्वं गच्छतीत्यादिव्यवहारादिति वाच्यम्। उत्क्षेपणत्वादीनां अनुगतजातिविशेषत्वेन प्रतीतेः तदन्तर्भावासंभवात्। तथा च भाष्यम् "भवत्युत्क्षेपादीनां जातिभेदात् प्रत्यक्षभेदः" इति। भ्रमणत्वादेः जलादिभ्रमणे स्यन्दनत्वादिना सांकर्यान्न जातित्वमिति।



कर्म च स्वोत्पत्तिक्षणपंचमक्षणोत्पन्नध्वंसप्रतियोगि स्वजन्यसंयोगनाश्यं च। क्रिया, क्रियातो विभागः, इति पूर्वोक्तक्रमेण पंचमक्षणे क्रियानाशात्। इदं च प्रायिकम्। आश्रयनाशसामग्रीपूर्वकालोत्पन्नस्य चतुर्थे, तादृशसामग्रीकालोत्पन्नस्य तृतीयक्षणे च नाशात्। तथाच नित्यावृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वमपि कर्मलक्षणं भवति।

॥ इति कर्मपरिच्छेदः ॥

**नित्यमेकमनेकानुगतं सामान्यम्। द्रव्यगुणकर्मवृत्ति। परं सत्ता, अपरं द्रव्यत्वादि।**

सामान्यं लक्षयति——नित्यमिति। अनेकेष्वनुगतं अनेकानुगतम्। सप्तम्या निरूपितत्वमर्थः। अनुगतत्वं च समवेतत्वम्। तच्च समवायसंबन्धावच्छिन्नवृत्तिमत्त्वम्। तथा च नित्यत्वे सत्यनेकनिरूपितसमवायसंबन्धावच्छिन्नवृत्तिमत्त्वं सामान्यस्य लक्षणमिति फलितम्। नित्यत्वमात्रोक्तौ गगनादौ अनेकसमवेतत्वमात्रोक्तौ घटपटादौ चातिव्याप्तिरिति दलद्वयम्। एकपदं स्वरूपकीर्तनपरम्[1], न तु लक्षणघटकम्। ननु आधेयत्वदलनिवेशेनैवावृत्तिगगनादावतिव्याप्तिवारणात् गुरुतरानेकसमवेतत्वदलनिवेशः निष्फल एव। परमाणुष्वतिव्याप्तिनिरासाय तदिति चेत्, तथापि समवेतत्वदलमात्रेणातिव्याप्तिवारणात् अनेकपदवैयर्थ्यमेवेति चेत्, न; जलपरमाणु-

---

[1] इदमत्रावधेयम्। नित्ये अनेकसमवेते च परमाणुपरिमाणे परममहत्परिमाणे नित्यसमवेतविशेषेषु चातिव्याप्तिवारणाय एकपदस्यापि लक्षणकोटिप्रवेशः अत्यन्तमावश्यकः। इदं चैकत्वमपेक्षाबुद्धिविशेषविषयत्वम्; सामान्ये गुणानङ्गीकारात् एवं च नित्ये एकस्मिन् अनेकवर्तिनि अत्यन्ताभावे समवाये च अतिव्याप्तिवारणाय समवेतत्वनिवेशः। ईश्वरीयज्ञानस्य नित्यतया एकतया समवेतत्वया च तत्रातिव्याप्तिवारणाय अनेक पदमिति।

गतरूपादौ नित्यत्वसमवेतत्वयोः सत्त्वात् अनेकत्वनिवेशेन प्रत्येकभिन्नस्य कस्यापि एकस्य परमाणुरूपस्य अनेकसमवेतत्वासंभवान्नातिव्याप्तिरिति तत्सार्थक्यात्। एवमपि विभुद्वयसंयोगाङ्गीकर्तृमते तत्संयोगे दलद्वयस्यापि सत्त्वात् तत्रातिव्याप्तिर्दुर्वारा इति चेत्, संयोगभिन्नत्वनिवेशनेन परिहार्यत्वात्।[1] अथ गोत्वादिसामान्यं सास्नादिमद्व्यक्तिवृत्ति। तथा च प्रलये सर्वपिण्डानामुच्छेदे सामान्यस्यापि उच्छेद इति चेत्, न; स्वरूपस्य सद्भावात्। न च तस्यैकत्वे नित्यत्वे च समवायस्यापि तादृशत्वात् अश्वादावपि समवायसत्त्वात् गोत्वाधारत्वापत्तिरिति वाच्यम्। यतः किंचिदधिकरणं गोत्वसमवायि किंचिन्नेत्यत्र अधिकरणस्वभाव एवोत्तरम्। तथा च यथा वायौ न रूपाधिकरणता अधिकरणस्वाभाव्यादेवं न गोत्वाधिकरणता अश्वादौ, संबन्धमात्रस्य संबन्ध्याधारताप्रयोजकत्वाभावात्। अन्यथा संयोगनैन्ये बदरस्यापि कुण्डाधारताप्रसंगात्। परं सत्तेति। अस्तीति सत्। सतो भावः सत्ता। "सदिति यतो द्रव्यगुणकर्मसु सा सत्ता", इति सूत्रम्। तत्र इतिकारेण प्रत्ययव्यवहारयोः प्रकारः प्रदर्श्यते। न चात्र मानाभावः, भावी भूतो वर्तमानश्च सर्व एव घटः सन्, न सदन्यः; इत्यनुगतप्रतीतिव्यवहारयोः नियामकतया तत्सिद्धेः।

॥ इति सामान्यपरिच्छेदः ॥

### नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः।

विशेषलक्षणमाह—नित्येति। व्यावर्तकाः=व्यावृत्तिज्ञानजनकाः। तथा च नित्यद्रव्यनिरूपितवृत्तिताश्रयत्वे सति व्यावर्तकत्वं नित्यद्रव्यविशेष्यकेतरभेदप्रकारकानुमितिजनकत्वं लक्षणम्। पृथिव्यादिचतुष्टयपरमाणवः आकाशादिपञ्चकं च नित्यद्रव्याणि। तद्विशेष्यकपरस्परव्यावृत्त्यनुमितिः—अयं परमाणुः इतरभिन्नः, इत्याकारकानुमितिः। तज्जनकत्वम् एतद्विशेषात् इति हेतावस्तीति

1 वस्तुतस्तु विभुद्वयसंयोगाङ्गीकर्तृमते आकाशकालयोः, कालदिशोः, दिगात्मनोश्च, संयोगाः परस्परं भिन्ना इति नित्यसंयोगस्यापि बहुत्वेन लक्षणघटकैकपदेनैव तत्र निरुक्तरीत्यातिव्याप्तिवारणं संभवति इति बोध्यम्।



समन्वयः। यथा हि लोके घटपटादीनां व्यावृत्तिबुद्धिः आकारादिना भवति, न तथा परमाणुषु, तत्र रूपरसादिगुणानामैकरूप्यात्। कृशत्वस्थूलत्वाद्यभावात्। आश्रयाभावात् आश्रयवैलक्षण्यस्यापि दुर्वचत्वात्। अतः परस्परभेदबोधप्रयोजकः कश्चन पदार्थोऽङ्गीकर्तव्यो भवति। प्रतिपरमाणु स भिन्नो विशेषः; विशेषकत्वात्तस्य। ननु विशेषेषु परस्परव्यावृत्तिज्ञानप्रयोजकं किमिति चेत्, अनवस्थाभयात् ते परं स्वात्मनैव स्वस्यापि व्यावर्तका भवन्ति इत्यत एव स्वपरसाधारण्येन व्यावर्तका इत्यभिहितम्। अत एव भाष्यकाराः "यथा च श्वमांसादीनां स्वत एवाशुचित्वम्, तद्योगादन्येषाम्, तथा इहापि तादात्म्यात् अन्त्यविशेषेषु स्वत एव प्रत्ययव्यावृत्तिः तद्योगात्परमाण्वादिषु" इति आहुः। गन्धवत्त्वादेरपि पृथिव्यादौ व्यावृत्तिजनकतयाऽतिव्याप्तिवारणाय नित्यद्रव्यविशेष्यकेति। परमाणुः स्पर्शवान्, स्पर्शवत्समवायिकारणत्वात्, इत्यादिस्थले हेतोः परमाणुविशेष्यकानुमितिजनकतया तादृशहेतावतिव्याप्तिवारणाय व्यावृत्तीति। ग्रन्थारंभे नित्यद्रव्यवृत्तयः अनन्ताः इत्युक्तिः नित्यद्रव्याणामानन्त्यात् विशेषाणामप्यानन्त्यद्योतनाय। इदानीं तु तेषां नित्यद्रव्यविशेष्यकानुमितिजनकज्ञानविषयत्वप्रकटनायेति भावः।[1]

1 इदमत्रावधेयम्। अत्र व्यावर्तकत्वं यदि व्यावृत्तिप्रकारकबुद्धिजनकज्ञानविषयत्वमात्रम्, तदा "जलमितरेभ्यो भिद्यते; स्नेहात्" इत्यनुमितिजनकज्ञानविषये स्नेहे नित्यपरमाणुवर्तिनि, "पृथिवी इतरभिन्ना, पृथिवीत्वात्" इत्यनुमितिजनकज्ञानविषये नित्यपरमाणुवर्तिनि पृथिवीत्वे चातिव्याप्तिः। तस्मात् व्यावर्तकत्वमत्र व्यावृत्तिमात्रप्रयोजकत्वम्, व्यावृत्तिप्रकारकज्ञानजनकत्वविशिष्टानुवृत्तिप्रकारकज्ञानाजनकत्वरूपम्, यस्य प्रयोजनं व्यावृत्तिज्ञानान्यत् न, तत्त्वमिति परिनिष्ठितं वक्तव्यम्। एवं च तेनैव सकलदोषाणां वारणात् "नित्यद्रव्यवृत्तयः" इति विशेषाणां स्थानकथनमात्रम्, न तु लक्षणकोटिप्रविष्टम्, प्रयोजनाभावात्। न चैवं विशेषस्येव विशेषसमवायस्यापि व्यावृत्तिमात्रप्रयोजकतया तत्रातिव्याप्तिवारणाय निरुक्तदलस्य लक्षणकोटिनिवेशः आवश्यकः इति वाच्यम्। तन्निवेशेऽपि तत्रातिव्याप्त्यवारणात्। अथ नित्यद्रव्यवृत्तित्वं नित्यद्रव्यसमवेतत्वमेव, तेन नाति-

**नित्यसंबन्धः समवायः अयुतसिद्धवृत्तिः। ययोर्मध्ये एकम-विनश्यदवस्थम् अपराश्रितमेवावतिष्ठते तावयुतसिद्धौ। यथा अवयवा-वयविनौ, गुणगुणिनौ, क्रियाक्रियावन्तौ, जातिव्यक्ती, विशेष-नित्यद्रव्ये चेति।**

समवायं निरूपयन्ति—नित्यसंबन्ध इति। नित्यत्वे सति संबन्धत्वं समवायलक्षणम्। संयोगादावाकाशादौ चातिव्याप्तिवारणाय दलद्वयम्। स्वभिन्नप्रतियोग्यनुयोगिकत्वरूपतृतीयदलस्यापि दानात् न नित्ये स्वरूपसंबन्धरूपे घटत्वात्यन्ताभावादौ अतिव्याप्तिः। संबन्धत्वं विशिष्टबुद्धिजनकत्वम्। लक्षणान्तरमाह—अयुतसिद्धेति। युतशब्दः यु मिश्रणामिश्रणयोः इति धातोः निष्पन्नः अमिश्रितवाचकः। तथा च युतौ अमिश्रितौ सिद्धौ युतसिद्धौ पृथक्सिद्धौ। तद्भिन्नौ अयुतसिद्धौ, संबद्धावेव सिद्धौ। अयुतसिद्धयोः वृत्तिः संबन्धः इति वाक्यार्थः। तथा च अयुतसिद्धसंबन्धत्वं समवायलक्षणम्। अयुतसिद्धपदलब्धं विशदयति—ययोरित्यादिना। ययोः = घटकपालयोः मध्ये। एकं=घटः, अविनश्यदवस्थं = विनश्यदव-

---

-व्याप्तिः, समवायस्यासमवेतत्वादिति चेत्, एवमपि समवेतत्वदलेनैवातिव्याप्ति-वारणात् नित्यद्रव्येत्यस्य वैयर्थ्यानिवारणात्। वस्तुतस्तु नित्यद्रव्यवृत्तित्वमिति स्वतन्त्रं लक्षणम्। तच्च नित्यद्रव्यमात्रवृत्तित्वम्। तेन जातौ नातिव्याप्तिः। नचैवं नित्यद्रव्यगतपरिमाणेऽतिव्याप्तिः। नित्यद्रव्यमात्रसमवेततावच्छेदकपदार्थविभाज-कोपाधिमत्त्वस्य विवक्षितत्वात्। समवेतपदनिवेशात् विशेषसमवायेऽपि नातिव्याप्तिः। एवं च "व्यावर्तकाः" इति स्वतन्त्रं द्वितीयं लक्षणम्। न च निरुक्तरीत्या व्यावर्तकत्वं व्यावृत्तिमात्रप्रयोजकत्वं विशेषसमवायेऽतिप्रसक्तमिति वाच्यम्। समवेतत्वेन विशेषणात्। तथाच "नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः" इति ग्रन्थः लक्षणद्वयनिरूपणपरः इति भाति।

शक्तिसंजीविनीव्याख्याटिप्पणी रामतुष्टये।
कृता शङ्करनारायणाह्वयेन यथामति॥

॥ शम्॥



-स्थाम् अनापन्नं सत्। अपराश्रितमेव=कपालाश्रितमेव। अवतिष्ठते=वर्तते। तौ=घटकपालौ। अयुतसिद्धौ=अयुतसिद्धपदवाच्यौ। एवम् अवयविगुणक्रिया-जातिविशेषाणां कदाचिदपि अवयवगुणिक्रियावद्व्यक्तिनित्यद्रव्याणि हित्वा पृथगवस्थितेरभावात् अवयवावयविनौ, गुणगुणिनौ, क्रियाक्रियावन्तौ, जातिव्यक्ती विशेषनित्यद्रव्ये चेति अयुतसिद्धविभागः कृतः।

अत्रायं निष्कर्षः यन्निष्ठकालनिरूपिताधेयतासामान्यं यदवच्छिन्नं तदुभयान्यतरत्वमिति परिनिष्ठितमयुतसिद्धलक्षणम्। समन्वयस्तु घटावयविनः कपालावच्छेदेन काले वर्तन्ते इह कपाले घटः इति प्रतीतेः। अतः यन्निष्ठकालनिरूपिताधेयतासामान्यं घटावयविनिष्ठकालनिरूपिताधेयतासामान्यम्, यदवच्छिन्नं—कपालावयवावच्छिन्नम्, तदुभयान्यतरत्वमवयवावयविनोरिति। एवमन्यत्रापि गुणगुण्यादिषु। नन्वत्र सामान्यपदं व्यर्थम्। आधेयतेत्येवालमिति चेत्, न; "इदानीं भूतले घटः" इत्यादि-प्रतीत्या घटनिष्ठकालनिरूपिताधेयतायाः भूतलावच्छिन्नतया तदुभयान्यतरत्वमादाय भूतलघटयोरप्ययुतसिद्धत्वप्रसंगात्। सामान्यपदनिवेशे तु घट-निष्ठकालनिरूपिताधेयतासामान्यान्तर्गतकपालावच्छिन्नवृत्तितायां भूत-लावच्छिन्नत्वविरहान्नातिव्याप्तिः।

ननु यत्पदग्राह्यघटनिष्ठाधेयतासामान्यान्तर्गतभूतलावच्छिन्नवृत्ति-तायां कपालावच्छिन्नत्वासंभवात् असंभव इति चेत्; न; एकस्मिन् समये 'इह भूतलकपालयोर्घटः' इति प्रतीत्यनुरोधेन भूतलावच्छिन्न-कपालनिरूपितवृत्तितायामपि कपालावच्छिन्नत्वसंभवान्नासंभव इति मन्तव्यम्। समवायस्यैकत्वेऽपि न दोष इत्युक्तमेव सामान्यनिरूपणे। अभावसाधारण्येन समवायसिद्धिस्तु न शंक्या। घटकाले भूतले घटो नास्तीति बुद्धयापत्तेः। तयोर्नित्यत्वात्। विस्तरस्तु पितृचरणकृत-प्रकाशादौ।

अयं च समवायः "इह तन्तुषु पटः" इति प्रत्यक्षसिद्ध इति नैयायिकाः। वैशेषिकाणां मते त्वनुमेय एव। अत एव प्रशस्तपादाचार्याः "अयुतसिद्धानामाधार्याधारभूतानां इहेति प्रत्ययहेतुः यः संबन्धः स

समवायः" इति आहुः। समवायसद्भावे अनुमानं तु "गुणक्रियादिविशिष्टबुद्धिः विशेषणविशेष्यसंबन्धविषया, विशिष्टबुद्धित्वात्, घटवद्भूतलमित्यादिविशिष्टबुद्धिवत्" इति। अत्र पक्षधर्मताबलात् लाघवज्ञानसहकारेणैकनित्यसमवायसिद्धिः। समवायस्यातीन्द्रियत्वे प्रमाणं च "समवायः अतीन्द्रियः, चेतनान्यत्वे सति असमवेतभावत्वात्, आकाशादिवत्" इत्यनुमानमेव। न्यायनये समवायस्य प्रत्यक्षत्वे मानं तु समवायः लौकिकप्रत्यक्षविषयः, योग्यप्रतियोगिकत्वे सति विशेषणतासंबन्धेन योग्यवृत्तित्वात्, भूतलवृत्तिघटाभाववत् इत्यनुमानम्। नैयायिकानामयमाशयः समवायः जातिव्यक्तिभ्यां सह स्वरूपेणानुभूयते। अननुभवे गौरयमिति गोत्वपुरोवर्तित्वयोः सामानाधिकरण्यबोधो न स्यात्। द्वयोः समानेन अधिकरणेन संबन्धः सामानाधिकरण्यम्। नो चेत् 'अयमयम्', 'गौश्च गौः' इति वैयधिकरण्यानुभवो जायेत। अभावप्रत्यक्षे इव समवायप्रत्यक्षेऽपि विशेषणता सन्निकर्षः। तथाच न्यायवार्तिकम्—"समवाये अभावे च विशेषणविशेष्यभावात्" इति।

॥ इति समवायपरिच्छेदः ॥

## अनादिः सान्तः प्रागभावः। उत्पत्तेः पूर्वं कार्यस्य।

प्रागभावलक्षणमाह—अनादिरिति। प्रागभावाप्रतियोगित्वे सति ध्वंसप्रतियोगित्वं प्रागभावस्य पर्यवसितं लक्षणम्। प्रागभावस्य उत्पत्त्यभावात् प्रागभावाप्रतियोगित्वं, कार्योत्पत्तिक्षणे तस्य नाशात् ध्वंसप्रतियोगित्वं चेति समन्वयः। विशेष्यमात्रोक्तौ घटादौ, विशेषणमात्रोक्तौ गगनादौ चातिव्याप्तिरिति दलद्वयसार्थक्यम्। कार्योत्पत्तेः पूर्ववृत्तितया अनादित्वं सान्तत्वं च प्रागभावस्य इति सूचयन्नाह—उत्पत्तेः पूर्वं कार्यस्य इति। कार्योत्पत्त्यव्यवहितपूर्वक्षणवृत्तितया प्रागभावस्य कार्यजनकत्वमिति भावः।

## सादिरनन्तः प्रध्वंसाभावः। उत्पत्त्यनन्तरं कार्यस्य।

प्रध्वंसाभावलक्षणमाह—सादिरिति। प्रागभावप्रतियोगित्वे सति



ध्वंसाप्रतियोगित्वं लक्षणम्। लगुडताडनादिना घटादिध्वंसजननात् ध्वंसस्य प्रागभावप्रतियोगित्वम्। जातस्य ध्वंसस्य पुनर्ध्वंसाभावात् न ध्वंसप्रतियोगित्वम्। किन्तु ध्वंसाप्रतियोगित्वमेवेति समन्वयः। विशेष्यमात्रोक्तौ नित्ये गगनादौ, विशेषणमात्रोक्तौ घटादौ चातिव्याप्तिरिति दलद्वयम्।

अत्र प्रागभावलक्षणे प्रागभावपदस्य तथा ध्वंसलक्षणे ध्वंसपदस्य च प्रवेशादात्माश्रयः। तथैव प्रागभावलक्षणे ध्वंसपदस्य, ध्वंसलक्षणे प्रागभावपदस्य च घटकतयाऽन्योन्याश्रयः। अतः प्रतियोगिजनकाभावत्वं प्रागभावस्य लक्षणम्। प्रतियोगिजन्याभावत्वं ध्वंसलक्षणमिति बोध्यम्।

प्रतियोगिजन्याभावत्वात् ध्वंसः सादिः इत्यभिप्रायेणाह—उत्पत्त्यनन्तरं कार्यस्येति। तथा च कार्यस्य सादित्वात् तज्जन्यस्य ध्वंसस्य सादित्वं कैमुतिकन्यायसिद्धमिति भावः। अनन्तत्वं च तस्यार्थात्सिद्धम्, ध्वस्तस्य पुनरुत्पत्त्यभावात्।

## त्रैकालिकसंसर्गाभावः अत्यन्ताभावः।

अत्यन्ताभावं लक्षयति—त्रैकालिकेति। त्रैकालिकत्वं च नित्यत्वम्। तच्च प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम्। संसर्गाभावत्वं च अन्योन्याभावभिन्नाभावत्वम्। एवं च प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वे सति अन्योन्याभावभिन्नत्वे सति अभावत्वं लक्षणं जातम्। ध्वंसप्रागभावान्योन्याभावाकाशादिवारणाय क्रमेण दलचतुष्टयम्। केचन संसर्गाभावत्वं तादात्म्यभिन्नसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वमिति वदन्ति। तन्मते ध्वंसप्रागभावयोः संबन्धावच्छिन्नप्रतियोगिताकत्वविरहेण अन्योन्याभावे च तादात्म्यभिन्नसंबन्धावच्छिन्नप्रतियोगिताकत्वविरहेण च, तत्र अतिव्याप्त्यभावात्। त्रैकालिकत्वपदं स्वरूपकीर्तनपरमेव न तु लक्षणघटकम्। यदि च ध्वंसप्रागभावयोरपि पूर्वापरकालिकघटादिसमवायस्यैव प्रतियोगितावच्छेदकसंसर्गत्वम्। अतः संसर्गाभावत्रयमपि तादात्म्यातिरिक्तसंसर्गावच्छिन्नप्रतियोगिताकमेवेत्युच्यते, तर्हि नित्यत्वमपि लक्षणघटकमेव। एवं च नित्यत्वे सति वृत्तिनियामकसंबन्धावच्छिन्नप्रतियोगिताकत्वमत्यन्ताभावत्वमिति फलितम्। वृत्तिनियामकसंबन्धनिवेशेन तादात्म्यसंबन्धनिरासः।

अयमत्यन्ताभावो बहुविधः। सामान्याभावः, विशेषाभावः, विशिष्टाभावः, उभयाभावः, अन्यतराभावः, समुदायाभावः, प्रत्येकाभावः, त्रितयाभावः इत्यादयः। क्रमेण उदाहरणानि यथा गुणे द्रव्याभावः; पीतघटवद्भूतले नीलघटाभावः; घटवद्भूतले पूर्वक्षणवृत्तित्वविशिष्टघटाभावः; तस्मिन्नेव घटपटोभयाभावः; गुणे द्रव्यगुणान्यतराभावः; गुणे द्रव्यद्रव्यत्वगुणगुणत्वकर्मकर्मत्वसमुदायाभावः; गुणे द्रव्याभावः गुणाभावः, कर्माभावः; तत्रैव द्रव्यगुणकर्मत्रितयाभावः इत्यादिकमूह्यम्।

**तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावोऽन्योन्याभावः। यथा घटः पटो न भवतीति।**

अन्योन्याभावं लक्षयति—तादात्म्येति। तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकत्वे सति अभावत्वम् अन्योन्याभावलक्षणम्। "येन संबन्धेन यन्नास्तीत्युच्यते तन्निष्ठा प्रतियोगिता तत्संबन्धावच्छिन्ना" इति न्यायेन 'घटः पटो न' इति वाक्येन घटे पटस्य तादात्म्यसंबन्धेन निषेधात् घटनिष्ठपटाभावीया प्रतियोगिता तादात्म्यसंबन्धावच्छिन्नेति भावः। घटः पटो न इति प्रतीतौ घटात्मा पटो नेति भानात्। "तदात्मा स न" इत्यत्र तादात्म्यं प्रतियोगितावच्छेदकः संबन्धः इति स्पष्टम्। अत्र लक्षणे अभावत्वमात्रनिवेशे अत्यन्ताभावादावतिव्याप्तिः। अतो विशेषणम्। तन्निवेशे अत्यन्ताभावस्य तादात्म्यभिन्नसंबन्धावच्छिन्नप्रतियोगितया ध्वंसप्रागभावप्रतियोगितयोः संबन्धावच्छिन्नत्वविरहाच्च न दोषः। ध्वंसप्रागभावप्रतियोगितयोरपि संबन्धावच्छिन्नत्वपक्षे समवायस्यैव तत्र संबन्धत्वेन अङ्गीकार्यतया नातिव्याप्तिः। तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकत्वमात्रोक्तौ घटाभाववान्नेति प्रतीतिविषये घटस्वरूपे घटाभाववद्भेदे तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकत्वसत्त्वादतिव्याप्तिः। अतः अभावपदम्। ननु पूर्वोक्तभेदे अभावत्वमपि वर्तत इति चेत्; अभावपदस्य भावभिन्नार्थकतया निरुक्तभेदस्य घटात्मकतया नातिव्याप्तिः। ननु संयोगादेः संयोगितादात्म्यरूपत्वे संयोगात्यन्ताभावादावतिव्याप्तिरिति चेत्, सत्यम्। नित्यत्वे सत्यत्यन्ताभावभिन्नाभावत्वं तत्त्वमिति



तदर्थात्। अन्योन्याभावोऽपि बहुविधः सामान्यभेदः, विशेषभेदः, विशिष्टभेदः, उभयभेदः, अन्यतरभेदः, समुदायभेदः, प्रत्येकभेदः, इत्यादिः। क्रमेणोदाहरणानि—घटः पटो न; नीलघटः रक्तघटो न; गोपीशिरस्थघटः भूतलवृत्तित्वविशिष्टघटो न; घटः घटपटौ न; घटः पटपुस्तकान्यतरो न; स च पटघटपुस्तकसमुदायो न; स च पटः पुस्तकं वा न; इति प्रतीतिसिद्धभेदाः। एवं व्यधिकरणधर्मावच्छिन्नभेदाः व्यधिकरणधर्मावच्छिन्नात्यन्ताभावाश्च।

ग्रन्थस्याभावनिरूपणेन परिसमाप्तिरिति न न्यूनता। तार्किकाणां मते भावरूपोऽप्यभावः अङ्गीक्रियते। अतः तादृशाः भावरूपाभावाः प्रदर्श्यन्ते—घटाभावाभावः घटस्वरूपः। घटाभाववद्भेदोऽपि घटस्वरूपः। समनैयत्यात्। घटभिन्नभेदः घटस्वरूपः। घटभेदाभावश्च घटस्वरूपः। तयोः घटत्वातिरिक्तत्वस्वीकारे प्रयोजनाभावात्। घटवद्भेदाभावो घटस्वरूपः। "घटवृत्तिर्नास्ति" इति प्रतीतिसिद्धाभावः घटत्वस्वरूपः। स चाभावः घटनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्वाभाववतः स्वरूपेण नास्तीति प्रतीतिसिद्धाभावः। घटप्रागभावध्वंसः घटस्वरूपः। घटपटान्यतराभावाभावस्य घटपटान्यतरस्वरूपतया अन्यतरान्तर्गतघटस्वरूपत्वमपि संभवति। घटपटकुड्यान्यतमाभावाभावस्य घटपटकुड्यान्यतमस्वरूपतया अन्यतमान्तर्गतघटस्वरूपत्वमपि संभवति। एषां चाभावानां भावरूपत्वस्वीकारे तद्भावाभावयोः समनैयत्यमेव अतिप्रसंगानापादकताविशिष्टं प्रयोजकम्। पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावस्य पूर्वक्षणवृत्तित्वविशिष्टघटरूपतया 'विशिष्टं शुद्धान्नातिरिच्यते' इति न्यायेन पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावः पूर्वक्षणवृत्तित्वविशिष्टघटस्य शुद्धघटस्य चैक्यात् घटरूप एव इति।

॥ इत्यभावपरिच्छेदः ॥

इत्येवं सप्त पदार्थाः निरूपिताः। तत्र विभागक्रमे निरूपणक्रमे च नियामकं किमिति चेत्, उच्यते। आत्मज्ञानस्यैव मुक्तिप्रयोजकत्वेन आत्मादिद्रव्याणां निरूपणं मुख्यमिति प्रथमतः तन्निरूपणम्।

सामान्यरूपेण तद्बोधे विशेषजिज्ञासायां ज्ञानाश्रयत्वेन कर्तृत्वेन च तन्निरूपणाय तदनन्तरं गुणकर्मनिरूपणम्। परमपरं चेत्यादिना सामान्यनिरूपणस्य यावदाश्रयनिरूपणसापेक्षतया द्रव्यगुणकर्मानन्तरं तन्निरूपणम्। अनुवृत्तिज्ञानोपयोगिसमवायं प्रथमं निरूप्य अनुवृत्तिज्ञानाजनकत्वविशिष्ट-व्यावृत्तिज्ञानजनकानां विशेषाणामनन्तरं निरूपणम्। किं च विशेषनिरूपणस्य नित्यसंबन्धत्वेन समवायनिरूपणाधीनत्वात् तदनन्तरं तन्निरूपणम्। अभाव-ज्ञानस्य प्रतियोगिज्ञानाधीनतया सर्वान्ते अभावनिरूपणमिति सर्वं समञ्जसम्।

**सर्वेषां पदार्थानां यथायथमुक्तेष्वन्तर्भावात् सप्तैव पदार्था इति सिद्धम्।**

उपसंहरति—सर्वेषामिति। प्रमाणप्रमेयादीनां न्यायसूत्रोक्तानां शक्तिसादृश्यतमःप्रभृतीनां दर्शनान्तरोक्तानामपि पदार्थानां सप्तस्वेवान्त-र्भावात् सप्त पदार्था इति उद्देशविभागादिकं सर्वं समंजसमिति भावः। अन्त-र्भावप्रकारादिकं दीपिकाप्रकाशादौ सम्यगुपदर्शितमिति नात्र तेषां विस्तरः।

**काणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये।**
**अन्नंभट्टेन विदुषा रचितस्तर्कसंग्रहः॥**

इति सर्वतन्त्रस्वतन्त्रान्नंभट्टविरचिते तर्कसंग्रहे गुणादिसर्वपदार्थनिरूपणम्।

समाप्तश्चायं तर्कसंग्रहाख्यो ग्रन्थः॥

॥ शिवम् ॥

नन्वयं ग्रन्थः न्यायशास्त्रावलंबी? उत वैशेषिकमतानुसारी? नाद्यः, न्यायनये षोडशपदार्थाङ्गीकारात्। नान्त्यः, वैशेषिकनये प्रमाणद्वयस्यै-वाङ्गीकारात् इति संशयमपाकुर्वन्नाह—काणादन्यायमतयोः इति। एवं च मतद्वयमनुसृत्यैवायं ग्रन्थः निर्मितः। न्यायोक्तषोडशपदार्थानां सप्तपदार्थेष्वन्तर्भावात्। वैशेषिकैश्च शब्दोपमानयोः पृथक्प्रामाण्यस्यैव निषेधात् तयोरनुमानगतार्थतया लाघवमित्येवोक्तमिति मन्तव्यम्। कणा-दस्येदं काणादं वैशेषिकदर्शनमित्यर्थः। गौतममुनिमतं न्यायमतं न्यायदर्शनमित्यर्थः। काणादश्च न्यायश्च काणादन्यायौ, तौ च ते मते च इति द्वन्द्वगर्भकर्मधारयः। कर्मधारयसमासत्वात् काणादन्यायाभिन्ने मते इति ज्ञातम्। षष्ठ्या विषयकत्वमर्थः। बालानां व्युत्पत्तिः बालव्युत्पत्तिः।



षष्ठ्याः समवेतत्वमर्थः। सिद्धये इति चतुर्थ्याः प्रयोजकत्वं, रचयतेः प्रतियत्नश्च अर्थः। प्रतियत्नश्च संस्कारः "रच प्रतियत्ने, प्रतियत्नः संस्कारः" इत्युक्तत्वात्। तदन्वयिकर्तृत्वं कृतिजन्यत्वपर्यवसितं अन्नंभट्टेनेति तृती-यार्थः। कृतावाधेयतयान्नंभट्टस्य तस्मिंश्च विदुषेति तृतीयान्तपदार्थस्या-भेदेनान्वयः। रचित इति क्तप्रत्ययस्य भूतकालः विषयतावांश्चार्थः। भूतकालस्य संस्कारेऽन्वयः। विषयतावतः तर्कसंग्रहे चान्वयः। एवं च काणादन्यायाभिन्नमतद्वयविषयकबालसमवेतव्युत्पत्तिसिद्धिप्रयोजकः विद्वदभि-न्नान्नंभट्टसमवेतकृतिजन्यभूतकालिकसंस्कारविषयाभिन्नः तर्कसंग्रहः इति बोधः।

एवम् अलौकिकैकप्रयोजनोद्देशेन प्रवृत्तवाक्यसमुदायरूपशास्त्रात् विदितसमस्तपदार्थतत्त्वस्य विषयदोषदर्शनेन विरक्तस्य मुमुक्षोः ध्यायिनः ध्यानपरिपाकवशात् साक्षात्कृतात्मनः निष्कामकर्मानुष्ठानात् अनागतधर्माधर्मा-वनर्जयतः पूर्वोपात्तं च धर्माधर्मप्रचयं योगर्द्धिप्रभावात् विदित्वा समाहृत्य भुञ्जानस्य पूर्वकर्मनिवृत्तौ वर्तमानशरीरापगमे अपूर्वशरीराभावात् शरीराद्येक-विंशतिदुःखसंबन्धः कारणाभावान्न भवतीति योऽयमेकविंशतिप्रभेदभिन्नदुःख-हानिर्मोक्षः सोऽपवर्गः शास्त्रलभ्य इति संक्षेपः।

तातशीर्वादवातेन तत्सूक्तिक्षेपणीयुजा।
तत्पादचिन्तानावा च तीर्णः शास्त्रार्णवः सुखम्॥
बहुग्रन्थालोकात्पितृचरणसंबोधनवशात्
अवाप्तं यद् ज्ञानं तदिह विदुषां तोषणकृते।
प्रबन्धाकारेण प्रणतजनकल्पद्रुमगुरोः
गुहस्येच्छामात्रात्परिणतमहो स्वादुफलवत्॥
स्वामिन् षण्मुखमूर्ते शान्तनमो("०६")वत्सरे कलौ कृपया।
रचिता तव पादाब्जे न्यस्ता विद्यार्थिभूतये व्याख्या॥
इयं रसायनवरा हृद्या मेध्या फलैर्युता।
शक्तिसंजीविनी शास्त्रकर्शितैः सेव्यतां सुखम्॥

इति कौशिकवंशमुक्ताफलायमानानां षड्दर्शनीग्रन्थनिर्माणप्रक-टितसर्वतोमुखवैदुष्यविराजितानां धर्ममार्गैकमहापथसंचारनिर्जितसकल-कलिकल्मषाणां भक्तिभागवताधीनमानसानां श्रीसुब्रह्मण्यशास्त्रिवर्याणा-मात्मजेन श्रीगर्भपुरीवास्तव्येन रामशर्मणा विरचिता तर्कसंग्रहव्याख्या शक्तिसंजीविन्याख्या संपूर्णा॥

। शुभं भूयात्।

॥ श्रीशिवकुमारार्पणमस्तु ॥

# APPENDIX I

॥ ओम् ॥

॥ श्रीगुरुभ्यो नमः ॥

## ॥ तर्कसंग्रहशक्तिसंजीविनीटिप्पणीपरिशिष्टम् ॥

पुटम् ३ (टिप्पणी)—'यूपाय दारु इत्यादावेव तादर्थ्यसमासाभ्युपगमात्' इति । अत्र चतुर्थी तदर्थेति सूत्रे चतुर्थीति योगविभागमङ्गीकृत्य अश्वाय घासः अश्वघासः इति चतुर्थीसमासमुपपादयतां व्युत्पत्तिवादकृतां मतेऽपि निरुक्तसुखेच्छाधीनेच्छाविषयव्यापाररूपे ज्ञाने पदार्थानामेव विषयतया प्रकृतबोधस्याविषयत्वेन सुखबोधः इत्यत्र चतुर्थीसमासः अनुपपन्न एवेति बोध्यम् ।

पुटम् ९ (शक्तिसंजीविनी)—'विभाजकधर्मसप्तकान्यतमवति लक्षणा' इति । अन्यतमत्वावच्छिन्ने तत्संबन्धिनि च लक्षणाद्वयमित्यर्थः । तेन अन्यतमत्वावच्छिन्ने द्रव्यादीनामभेदेनान्वयेऽपि न एकदेशान्वयापत्तिः ।

पुटम् १६ (श. सं.)—'गन्धनिष्ठाधेयत्वनिष्ठाधेयत्वानिरूपितगन्धनिष्ठाधेयतानिरूपिता या अधिकरणता तदाश्रयत्वम्' इति । इदमुपलक्षणम्—गन्धनिष्ठाधेयताविशिष्टाधिकरणतावत्त्वमिति लक्षणकरणेनापि गन्धेऽतिव्याप्तिवारणं बोध्यम् । अधिकरणतायामाधेयतावैशिष्ट्यञ्च स्वनिरूपितत्वस्वासामानाधिकरण्योभयसंबन्धेन । तथा च गन्धनिष्ठाधेयतानिरूपितगन्धनिष्ठाधिकरणतायाः स्वनिरूपकाधेयतासमानाधिकरणतया न तामादाय गन्धेऽतिव्याप्तिरिति ।

पुटम् ३१ (टि.)—'साधनत्वस्य करणत्वरूपतया' इति । ग्रन्थकृता प्रत्यक्षं प्रति इन्द्रियाणां करणत्वप्रतिपादनात्, मनसः इन्द्रियस्य सुखादिप्रत्यक्षं प्रति करणत्वमेव, न तु कारणत्वमात्रमिति भावः ।

पुटम् ३३ (टि.)—'संख्यादिषु अतिव्याप्तिवारणसंभवः' इति । एतेन रूपत्वादावतिव्याप्तिवारणाय निवेशनीयस्य गुणपदस्य विशेषगुणपरत्वाङ्गीकारेणैव संख्यादावतिव्याप्तिवारणात् मात्रपदमनर्थकमित्यपास्तम् । निरुक्तरीत्या परमाणुगतरूपेऽव्याप्तेः । सांसिद्धिकद्रवत्वस्य विशेषगुणस्य चक्षुर्ग्राह्यतया तत्रातिव्याप्तेश्च इति ।



पुटम् ३४ (श. सं.)—'निष्कृष्टलक्षणम्' इति । एवं च दलद्वयेऽपि प्रत्यक्षत्वेन प्रत्यक्षं न निवेश्यते । निरुक्तानुमानद्वयविषयतयोः लौकिकसन्निकर्षाप्रयोज्यतयैव पूर्वोक्तातिव्याप्त्यसंभवयोर्वारणात् इति ।

पुटम् ३५ (श. सं.)—'चित्ररसादौ न मानम्' इति । अत्र हरीतक्यां चित्ररसमाशङ्क्य तत्र अवयवरसप्रतीत्यैवोपपत्त्या हरीतक्याः नीरसत्वे इष्टापत्तिमङ्गीकुर्वन्तोऽपि उपस्कारकाराः शङ्करमिश्राः "चित्रस्पर्शस्तु रूपस्थलीययुक्त्या स्वीकरणीय एव" इत्याहुः ।

पुटम् ३८ (श. सं.)—'द्वित्वादीनां नाशकान्तराभावेन अपेक्षाबुद्धिनाशेनैव तन्नाशोऽङ्गीकर्तव्यः' इति । अत्र द्वित्वादेरपेक्षाबुद्धिविनाशविनाश्यत्वे संदर्शितश्चायमनुमानप्रयोगः आचार्यैः — द्वित्वादिकं स्वनिमित्तकारणध्वंसविनाश्यम्, आश्रयनाशविरोधिगुणान्यतरासन्यध्वंसप्रतियोगित्वे सति गुणत्वात्, चरमशानवत्, इति । नित्ये जलादिपरमाणुरूपादौ, असमवायिकारणध्वंसविनाश्ये घटादौ च व्यभिचारवारणाय हेतौ दलद्वयम् । न चाप्रयोजकशङ्कावकाशः । निमित्तकारणध्वंसाविनाशिनो गुणस्य आश्रयनाशविरोधिगुणान्यतरनाश्यत्वनियमात् । अन्यथा नाशकान्तराभावेन सदातनत्वापत्तेः ।

पुटम् ४२ (श. सं)—'विभागविनाशस्तु क्वचिदाश्रयनाशात्, क्वचिदुत्तरसंयोगनाशात्' इति । अयं च विभागः स्वनाश्यसंयोग इव द्विविधः कर्मजः विभागजश्च इति । आद्यो द्विविधः अन्यतरकर्मजः, उभयकर्मजश्च इति । द्वितीयोऽपि कारणमात्रविभागजः, कारणाकारणविभागजश्च इति द्विविधः इत्याद्यन्यत्र विस्तरः । अयं च विभागजविभागः वैशेषिकैरेवाङ्गीकृतः । तथा च तेषामयमाभाणकः "द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे । यस्य न स्खलिता बुद्धिस्तं वै वैशेषिकं विदुः ॥" इति ।

पुटम् ४८ (टि.)—'मात्रपदज्ञानपदयोर्वैयर्थ्य' मिति । इदमुपलक्षणम् । यदि प्रत्यभिज्ञासामग्रीकोटौ संस्कारजन्यस्मृतेरेव प्रवेशः, न तु संस्कारस्यापि इत्युच्यते, तदा उक्तकारणतावच्छेदकतायां पर्याप्तिरपि न निवेशनीय इत्यपि बोध्यम् ।

पुटम् ५० (श. सं.)—'भ्रमभिन्नत्वेनाप्यनुभवस्य विशेषणीयत्वात् । तद्ज्ञानस्य तदंशे तद्वत्ताग्राहित्वेन भ्रमरूपतया भ्रमभिन्नत्वस्याभावात्' इति ।

अत्रेदं बोध्यम्—यदीदृशरीत्या अव्याप्तिर्वार्यते तदा तद्वति तत्प्रकारकत्वमिति विशेषणस्य वैयर्थ्यापत्तिः। अप्रमायाः भ्रमभिन्नत्वाभावादेव तत्रातिव्याप्तेर्वारणात्। किं च निरुक्तस्य पर्वतो वह्निमान् ह्रदो वह्निमान् इति समूहालम्बनज्ञानस्य पर्वते वह्न्यवगाहित्वेन तदंशे प्रमात्वमिष्टमेव। अत एव 'भ्रमभिन्नं ज्ञानं प्रमा' इति प्रथमलक्षणमुक्त्वा तस्य शुक्तिरजतयोरिमे रजते इति समूहालंबनज्ञानाव्यापकतया 'तद्वद्विशेष्यकं तत्प्रकारकं ज्ञानम्' इति द्वितीयलक्षणानुधावनं कारिकावल्यामिति मुक्तावलीव्याख्यानपरिपाटिरपि संगच्छते। शक्तिसंजीविन्यामप्युत्तरत्र ( पृ. ११६ – १७ ) पर्वतो वह्निमान् ह्रदो वह्निमान् इति समूहालंबनस्य आंशिकप्रमात्वमभ्युपगतप्रायमेव इति।

पृष्ठम् ५४ ( टि. ; – 'एतादृशलक्षणमभिप्रेत्यैव' इति। व्यापारवद्-पदाघटितम् "असाधारणकारणं करणम्" इति लक्षणमभिप्रेत्यैवेत्यर्थः। अत्र करणलक्षणपरिष्कारविषये विवदन्ते प्राचीननवीननैयायिकाः।

तत्र प्राचीनाः "व्यापारवदसाधारणकारणं करणम्" इति करणलक्षणं मन्वते। एतल्लक्षणघटकदलप्रयोजनादिकं शक्तिसंजीविन्यामेव दर्शितम्। एवं च तेषां मते इन्द्रियार्थसंनिकर्षद्वारा इन्द्रियस्य, परामर्शद्वारा व्याप्तिज्ञानस्य, अतिदेशवाक्यार्थस्मरणद्वारा सादृश्यज्ञानस्य, पदार्थज्ञानद्वारा पदज्ञानस्य च यथासंख्यं प्रत्यक्षानुमित्युपमितिशाब्दबोधान् प्रति करणत्वं बोध्यम्। न च श्रोत्रेन्द्रियस्य आकाशस्वरूपतया शब्दश्रोत्रसन्निकर्षस्य समवायस्य अजन्यत्वेन तज्जन्यत्वघटितार्थकव्यापारदलघटितनिरुक्तकरणलक्षणस्य श्रोत्रे अव्याप्तिरिति वाच्यम्। शब्दप्रत्यक्षेऽपि शब्दस्य श्रोत्रमनःसंयोगस्य वा श्रोत्रजन्यस्य व्यापारत्वाभ्युपगमेनाव्याप्तेर्वारणात् इति।

नव्यास्तु असाधारणं कारणं करणम्। कारणस्य असाधारणत्वं च फलायोगव्यवच्छिन्नत्वं, यस्मिन् सति कार्यमव्यवधानेन भवत्येव तत्त्वमित्यर्थः। तथा च व्यवहितकारणानां दण्डादीनां कार्यसामान्यसाधारणकारणानां कालादीनां च घटकरणत्वव्युदासः। एवं च प्रत्यक्षानुमित्युपमितिशाब्दप्रमाकरणत्वं क्रमशः इन्द्रियार्थसंनिकर्ष-परामर्श-सादृश्यज्ञान-पदार्थोपस्थितीनामेव, न तु इन्द्रिय-व्याप्तिज्ञानादीनां; तेषां स्वजन्यसंनिकर्षपरामर्शादिभिः स्वफलतो व्यवहितत्वात् इत्याहुः।



अत्रेदं बोध्यम्। निरुक्तरीत्या प्राचीनमते क्वचित् भावकार्योत्पत्तौ द्रव्यस्य स्वजन्यगुणक्रियान्यतरद्वारा करणत्वम्; यथा इन्द्रियस्य दण्डस्य च क्रमशः स्वजन्य-सन्निकर्ष-चक्रभ्रमणद्वारा प्रत्यक्ष-घटकरणत्वम्।(वस्तुतः दण्डस्य स्वजन्यदण्डचक्रसंयोग-जन्यचक्रभ्रमणद्वारैव घटकरणत्वम्।)क्वचिच्च कार्योत्पत्तौ गुणानामेव स्वजन्यगुणान्तरद्वारा करणत्वम्। यथा व्याप्तिज्ञानादीनां स्वजन्यपरामर्शादिद्वारा अनुमित्यादिकरणत्वम्। नव्यमते तु सर्वत्र भावकार्योत्पत्तौ गुणस्य कर्मणो वा करणत्वं, न क्वचिदपि द्रव्यस्य। अथैवमिन्द्रियाणां कुठारादीनां च प्रत्यक्षं प्रति काष्ठच्छेदनं प्रति च क्रमशः करणत्वानुपपत्तिः इति चेत्, इष्टापत्तेः। तत्रापि इन्द्रियार्थसंनिकर्षस्यैव कुठार-काष्ठसंयोगस्यैव च क्रमशः करणत्वाभ्युपगमात्। एवं च प्राचां मते भावकार्य-सामान्यं प्रति द्रव्यगुणान्यतरत्वेन करणत्वं गुणक्रियान्यतरत्वेन व्यापारत्वं च कल्पनीयमिति, तदपेक्षया नव्यमते गुणक्रियान्यतरत्वेन करणत्वमात्रं कल्पनीयमिति लाघवम् इति।

अथात्र द्वयोर्मतयोर्मध्ये तर्कसंग्रहकाराणां कतरस्मिन् मते आदरः इति चेत्; अत्रोच्यते। प्रत्यक्षपरिच्छेदे "एवं इन्द्रियार्थसंनिकर्षजन्यं ज्ञानं प्रत्यक्षम्। तत्करणमिन्द्रियम्। तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम्।" ( पृष्ठम् ६५ ) इति विलिखतां तेषां प्राचीनमतमेवाभिमतमिति भाति। इन्द्रियाणां संनिकर्षद्वारैव प्रत्यक्षकरणत्वात्। परन्तु अनुमानपरिच्छेदे "स्वार्थानुमितिपरार्थानुमित्योः लिङ्ग-परामर्श एव करणम्। तस्माल्लिङ्गपरामर्शोऽनुमानम्।" ( पृष्ठम् ८० ) इति संग्रहग्रन्थपर्यालोचनया, 'वह्निव्याप्यधूमवान् अयमिति शाब्दपरामर्शानुरोधेन परामर्शस्यैवानुमितिकरणत्वम्; व्यापारवत्कारणं करणमिति वादिनां मते एव व्याप्तेः परामर्शद्वारा करणत्वम् इति' दीपिकाग्रन्थपर्यालोचनया च अनुमितिकरणविषये प्राचीनमतापेक्षया नव्यमते एव संग्रहकाराणामादरः इति प्रतिभाति। उपमान-परिच्छेदे उपमितिं प्रति सादृश्यज्ञानस्य साक्षाद्वा, स्वजन्यातिदेशवाक्यार्थस्मरणद्वारा वा करणत्वं संग्रहकृदभिमतम् इत्यत्र न किञ्चिन्निश्चायकमस्ति। दर्शयिष्यमाण-रीत्या व्याख्यातृभेदेन तत्र मूलपाठस्य भेददर्शनात्, स्वयं दीपिकायामुपमानस्या-व्याख्यानाच्च। "आप्तोपदेशः शब्दः" इति गौतमसूत्रोक्तलक्षणानुरोधेन शब्द-परिच्छेदे "आप्तवाक्यं शब्दः" ( पृष्ठम् १०७ ) इति, "वाक्यार्थज्ञानं शाब्द-ज्ञानम्। तत्करणं शब्दः॥" ( पृष्ठम् ११५ ) इति च विलिखनात् संग्रहकारैः

जरन्नैयायिकमतमेव स्वाभिमतमिति दर्शितम् । शब्दस्य स्वविषयकज्ञानजन्यपदार्थोपस्थितिद्वारैव शाब्दबोधकरणत्वात् । एवं च क्वचित् साक्षात् क्वचिच्च व्यापारद्वारा यत् असाधारणं कारणं तदेव करणमिति तेषामभिप्रायः इत्यायातम् । अतएव तादृशद्विविधकरणसाधारणम् "असाधारणकारणं करणम्" इति लक्षणं कृतं तैः । सर्वत्र अनुगतरूपेण करणत्वपरिष्कारसंभवेऽपि बालानां सुखबोधाय कृते तर्कसंग्रहे शिशुहितार्थं विरचितायां दीपिकाव्याख्यायां च तादृशः पन्थाः नादृतः अन्नंभट्टैः इत्यत्र सुधियः प्रमाणम् इति ।

पुटम् ६३ (तर्कसंग्रहः)–'तद्द्विविधम्, निर्विकल्पकं सविकल्पकं च इति ।' इति । स्यादेतत्; तर्कसंग्रहकृद्भिः "सर्वव्यवहारहेतुर्ज्ञानं बुद्धिः" (पुटम् ४६) इति बुद्धिसामान्यलक्षणकरणात् सर्वथा व्यवहाराहेतोर्निर्विकल्पकस्य अलक्ष्यतया तल्लक्षणानाक्रान्तत्वेन निर्विकल्पकनिरूपणं बुद्धिप्रपञ्चे असंगतम् । न च निर्विकल्पकमपि लक्ष्यमेव । तथा च व्यवहारत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकजातिमत्त्वमिति परिष्कृतस्य (श. सं. पुटम् ४७) जातिघटितलक्षणस्य निर्विकल्पकसाधारण्यान्नासंगतिरिति वाच्यम् । तादृशी जातिः ज्ञानत्वरूपैवेत्यभिप्रायेणैव तादृशपरिष्कृतलक्षणस्य कृतत्वात् । व्यवहारहेतुताशून्ये निर्विकल्पके ईश्वरज्ञाने च ज्ञानत्वस्य सत्त्वेन तस्य तादृशहेतुतायामवच्छेदकत्वासंभवात् । अन्यूनानतिप्रसक्तधर्मस्यैवावच्छेदकत्वनियमात, तादृशज्ञानत्वजातिमादाय लक्षणस्य निर्विकल्पकसाधारण्योपपादनासंभवात् । अथ घटमहं जानामीत्यनुव्यवसायविषयतावच्छेदकं ज्ञानत्वमेव ज्ञानसामान्यलक्षणमङ्गीक्रियते । एतादृशरीत्यैव संग्रहकृद्भिः स्वकीयव्याख्याने दीपिकायां व्याख्यानात् । एवं च नोक्तासंगतिरिति चेत्; व्यवहारहेतुताया इव तादृशानुव्यवसायविषयताया अपि अतीन्द्रिये निर्विकल्पके असंभवेन तदतिप्रसक्तस्य निर्विकल्पकसाधारणस्य ज्ञानत्वस्य तस्यामनवच्छेदकत्वात् ।

अत्रोच्यते – "ज्ञानं बुद्धि" रिति संग्रहस्थलक्षणवाक्यस्य "ज्ञानपदशक्यं बुद्धिः" इत्यर्थकतया निर्विकल्पकसाधारणीभूतायां ज्ञानपदशक्यतायां या अवच्छेदिका ज्ञानत्वजातिः सैव बुद्धिसामान्यलक्षणमित्येव ग्रन्थकर्तुस्तात्पर्यम् । अत एव निर्विकल्पकस्यापि प्रकृतत्वेन "स्मृतिभिन्नं ज्ञानमनुभवः" (पु. ४८) इति निर्विकल्पकसाधारणमेवानुभवलक्षणं कृतं तेन । एवं च बुद्धिप्रपञ्चनिरूपणावसरे



निर्विकल्पकनिरूपणस्याप्यपेक्षितत्वेन न निरुक्तासंगतिरिति । तथा च सर्वव्यवहारहेतुरिति स्वरूपकथनमात्रं, न तु लक्षणघटकमिति ध्येयम् ।

अथैवमपि प्रत्यक्षप्रमानिरूपणावसरे निर्विकल्पकनिरूपणस्यासङ्गतत्वमनिवार्यम् । तथाहि तद्वति तत्प्रकारकानुभवत्वं हि ग्रन्थकृन्मते प्रमालक्षणम् (पु. ४९)। तादृशं च प्रमात्वं निर्विकल्पकस्य न संभवति । निर्विकल्पकज्ञाने प्रकारतादिविषयतानामनङ्गीकारात् । अपि च एतद्ग्रन्थकृदुक्तस्य तदभाववति तत्प्रकारकत्वरूपाप्रमात्वस्यापि निर्विकल्पकेऽसंभवात् "सः (अनुभवः) द्विविधः, यथार्थोऽयथार्थश्च" (पु. ४८) इति द्वेधा विभागासंगतिः । निर्विकल्पकसहकारेण त्रिधा विभागस्यैव करणीयत्वात् इति चेत् ।

अत्र केचित् "निर्विकल्पकं भ्रमप्रमाभिन्नम् । एवं च 'अनुभवो द्विविधः, निष्प्रकारकः सप्रकारकश्च इति । तत्राद्यो निर्विकल्पकम् । द्वितीयस्तु यथार्थायथार्थानुभवभेदेन द्विविधः । यथार्थानुभवोऽपि प्रत्यक्षानुमानोपमितिशाब्दभेदेन चतुर्विधः', इत्यादिरीत्यैव विभागं कृत्वा क्रमशः तत्तज्ज्ञानानां निरूपणं कर्तव्यम्" इति वदन्ति । तन्न । निर्विकल्पकस्य हि भ्रमप्रमाभिन्नत्वेऽपि तस्य इन्द्रियार्थसंनिकर्षजन्यत्वेन प्रत्यक्षज्ञानरूपत्वं निर्विवादम् । अत एव "नामजात्यादियोजनारहितं वैशिष्ट्यानवगाहि निष्प्रकारकं प्रत्यक्षम्" इति निर्विकल्पकलक्षणं कृतं चिन्तामणौ । एवं च निरुक्तरीत्या विभागे कृते निर्विकल्पकस्य प्रत्यक्षभिन्नत्वं प्रतिपादितं स्यादिति सिद्धान्तविरोधापत्तेः ।

अत्रोच्यते–बुद्धेः पदार्थान्तरत्ववादिनां साङ्ख्यानां मतनिरासाय गौतममुनिना सूत्रितं "बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्" इति बुद्धिलक्षणमनुसृत्य "ज्ञानपदशक्या बुद्धिः" इति तात्पर्येण बुद्धिलक्षणं कृतं ग्रन्थकृता । तच्च बुद्धिलक्षणं निर्विकल्पकसाधारणमिति तन्निरूपणसंगतिः । अपि च "इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" इति प्रत्यक्षसूत्रे अव्यपदेश्यव्यवसायात्मकपदयोः क्रमेण निर्विकल्पकसविकल्पकज्ञानार्थकतया उक्तसूत्रघटकमिन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमिति प्रत्यक्षलक्षणम् अर्थतः "इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्" इत्यनूद्य तदनन्तरं तत्सूत्रानुरोधेनैव निर्विकल्पकसविकल्पकयोः निरूपणं क्रमशः क्रियते ग्रन्थकारेण । अपि च प्रत्यक्षसूत्रस्थमव्यभिचारिपदं भ्रमभिन्नार्थकमिति "भ्रमभिन्नज्ञानत्वं प्रमात्वम्" इति सूत्रकृत्सूचितं प्रमालक्षणं

मनसि कृत्वैव भ्रमतद्भिन्नस्वरूपविभाजकधर्माभ्यां विभागः कृतः "स द्विविधः यथार्थोऽयथार्थश्च" इति। तादृशभ्रमभिन्नज्ञानस्वरूपप्रमात्वं निर्विकल्पकसाधारणमिति सूत्रोपदर्शितमार्गेणैव प्रत्यक्षप्रमानिरूपणावसरे निर्विकल्पकनिरूपणे न कोऽपि दोषः। परन्तु तादृशस्य भ्रमभिन्नज्ञानस्वरूपप्रमालक्षणस्य रजतत्वप्रमा, स्थाणुत्वप्रम इत्यादिव्यवहारौपयिकत्वाभावात्, तादृशव्यवहारोपयिकं निर्विकल्पकव्यावृत्तं सविकल्पकप्रमामात्रसाधारणम् अर्थात् प्रमाविशेषलक्षणमुक्तं ग्रन्थकृता "तद्वति तत्प्रकारकोऽनुभवो यथार्थः" इति। अतएव "भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा" (कारिका. १३४) इति प्रथमं प्रमालक्षणमुक्त्वा, तस्य उक्तरीत्या रजतत्वप्रमा इति व्यवहारानौपयिकत्वात् प्रमाविशेषलक्षणं कृतं भाषापरिच्छेदे "अथवा तत्प्रकारं यज्ज्ञानं तद्विशेष्यकम्। तत्प्रमा" इति। एतादृशद्वितीयलक्षणानुरोधेनैव निर्विकल्पकं प्रमाभ्रमभिन्नं भवति इति उक्तं तत्रैव "न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम्॥" (कारिका. १३५) इति अनेन। तथा च तादृशभ्रमभिन्नस्वरूपं तु प्रमात्वं निर्विकल्पकसाधारणमेव इति बोध्यम्।

पृष्ठम् ७४ (टि.) – 'विषयताघटितत्वेन व्याप्तिं परिष्कृत्य' इति। हेतुनिष्ठविषयतानिरूपितसामानाधिकरण्यनिष्ठविषयतानिरूपिताभावनिष्ठविषयतानिरूपितप्रतियोगिनिष्ठविषयतानिरूपितभेदनिष्ठविषयतानिरूपितसाध्यनिष्ठविषयतानिरूपितविषयतावत्सामानाधिकरण्यं व्याप्तिः इति परिष्कृत्य इत्यर्थः।

पृष्ठम् १०४ (त. सं.) – 'अतिदेशवाक्यार्थस्मरणं व्यापारः' इति। इदं वाक्यं प्राक्षिप्तमिव दृश्यते। दीपिका–न्यायबोधिनी – वाक्यवृत्ति — निरुक्ति – नीलकण्ठीय – रामरुद्रीय – नृसिंहप्रकाशिकादिषु व्याख्यानायानुद्धृतत्वात्। किञ्च अनेन वाक्येन सादृश्यज्ञानस्य अतिदेशवाक्यार्थस्मरणद्वारकोपमितिकरणत्वं ग्रन्थकृदभिमतमिति स्फुटं प्रतिभानात्, "वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति" इति वा, "गोसदृशं पिण्डं पश्यन् वाक्यार्थं स्मरति" इति वा (पृ. १०६) समीचीनः पाठः इत्यत्र दर्शयिष्यमाणरीत्या व्याख्यातॄणामभिप्रायद्वैविध्यासङ्गतेः।

पृष्ठम् १०६ (त. सं.)–'वनं गतो वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति' इति। अस्य वाक्यस्य पाठभेदे विवदन्ते व्याख्यातारः। पूर्वोक्त एव पाठः नीलकण्ठीय–नृसिंहप्रकाशिका-निरुक्ति-वाक्यवृत्त्याद्यभिमतः। तत्र नीलकण्ठाः–



अनेन वाक्येन, अतिदेशवाक्यार्थस्मरणं सादृश्यदर्शनजन्यम् उद्बोधकान्तरजन्यं वा, उभयमपि सादृश्यदर्शनस्य स्वकार्योपमित्युत्पादने सहकारि, न तु सादृश्यदर्शनजन्यमेव स्मरणं सहकारि इति सूचितमित्याहुः। नृसिंहपण्डितास्तु अस्य ग्रन्थस्य "वाक्यार्थं स्मरन् वनं गतः" इति योजनया अतिदेशवाक्यजशाब्दबोधोत्पन्नात् तत्समानाकारकसंस्कारात् गोसादृश्यविशिष्टवस्तुदर्शनरूपोद्बोधकसहकृतात् जायमानया अतिदेशवाक्यार्थस्मरणधारया विशिष्टः सन् अरण्यं प्रविष्टः ग्रामीणः तादृशस्मरणसमानकालीनचक्षुःसंयोगात् गोसादृश्यप्रकारकप्रत्यक्षज्ञानवान् भवति इति अर्थं वर्णयन्ति। निरुक्तिकाराणामपि प्रायशः अयमेवाभिप्रायः इति भाति। अयं च मार्गः "उपमितिं प्रति सादृश्यज्ञानं फलायोगव्यवच्छिन्नं सत् करणम्" इति वदतां नव्यनैयायिकानाम्मतानुसारी। वाक्यवृत्तिकृतस्तु "स्मरन् गोसदृशं पिण्डं पश्यति" इति प्रतीकं धृत्वाऽपि "अत्र दर्शनानन्तरजन्यं स्मरणं बोध्यम्" इत्याहुः। रामरुद्रभट्टाचार्यास्तु निरुक्तपाठस्य प्रामादिकत्वं "वनं गतो गोसदृशं पिण्डं पश्यन् वाक्यार्थं स्मरति" इति पाठस्यैव समीचीनत्वं चाभ्युपगम्य सादृश्यज्ञानस्य उपमितिजनकत्वम् अतिदेशवाक्यार्थस्मरणद्वारा इत्यर्थमुपवर्णयन्ति। मार्गोऽयं प्राचीननैयायिकमतानुसारी।

इदमत्रावधेयम्। मतद्वयेऽपि सादृश्यज्ञानमेव करणम्। इयांस्तु विशेषः। प्राचीनमते अतिदेशवाक्यार्थस्मरणस्य व्यापारत्वं, नव्यमते तु तस्य सहकारित्वम् इति। परन्तु यदि प्राचीनमतमवलम्ब्यते, यथा शक्तिसंजीविन्याम्, तदा रामरुद्रीयोपदर्शितरीत्या "गोसदृशं पिण्डं पश्यन् वाक्यार्थं स्मरति।" इत्येव पाठः आदरणीयः। यदि "गोसदृशं पिण्डं पश्यति।" इति पाठ एवान्नंभट्टाभिमतः इति निश्चीयते, तदा टिप्पण्यां दर्शितरीत्या (पृ. १०५) नव्यमतमेव ग्रन्थकृदभिमतमिति बोध्यम्।

पृष्ठम् १११ (श. सं.) – 'तत्त्वमसीत्यादौ जहदजहल्लक्षणाप्रतिपादनं वेदान्तिनां मतानुसारेण' इति। नैयायिकानां मते तु तत्र तच्छब्दस्यैव तदीये लक्षणामङ्गीकृत्य तदीयः त्वमसि इति वाक्यार्थस्य वर्णनात् इति भावः।

पृष्ठम् १२४ (टि.) 'तदाकरविरुद्धमिति भाति' इति। इदं च न्यायकोशकृदुक्त्यनुसारेण। परमार्थतस्तु स्वप्नस्य "प्रत्यक्षयामि, अनुभवामि, पश्यामि,

शृणोमि" इति शब्दोल्लेखनीयानुभवरूपत्वेन सर्वेषामप्यनुभवात्, बाधकप्रमाणाभावाच्च अनुभवत्वमेव स्वप्नस्य। न चेन्द्रियसंयोगाद्यभावरूपबाधकप्रमाणस्य पूर्वोपदर्शितस्य सत्त्वान्नानुभवोऽयं स्वप्न इति वाच्यम्। आपणस्थरजतनिष्ठरजतत्वे इन्द्रियसंनिकर्षं विनाऽपि तत्र संनिकर्षेणेव जायमानस्य शुक्ताविदं रजतमिति ज्ञानस्य यथा भ्रमानुभवत्वं, तथा स्वप्नदशायाम् इन्द्रियसंनिकर्षं विनापि तदानुभूयमानवस्तुषु इन्द्रियसंनिकर्षेणेव तेषामनुभवोदयात् स्वप्नस्य मानसभ्रमानुभवरूपत्वे बाधकाभावात्। अत एव "उपरतेन्द्रियग्रामस्य प्रलीनमनस्कस्य इन्द्रियद्वारेणेव यदनुभवं मानसं तत् स्वप्नज्ञानम्" इति प्रशस्तदेवाचार्यैः, "यत्रासत्यपि चक्षुरादिव्यापारे चक्षुषाऽमुमर्थं पश्यामि, इमं श्रोत्रेण शृणोमीत्यनुव्यवसायः, तत् स्वप्नज्ञानम्" इत्युदयनाचार्यैश्च स्वप्नज्ञानस्य मानसभ्रमानुभवत्वमेव व्यवस्थापितम्। किञ्च "अयथार्थानुभवस्त्रिविधः, संशयविपर्ययतर्कभेदात्" इति संग्रहवाक्यस्य (पु. ११८) व्याख्यानावसरे दीपिकायां "स्वप्नस्य मानसविपर्ययरूपत्वान्न त्रैविध्यविरोधः" इति विलिखद्भिः अन्नंभट्टैरपि स्वप्नस्य भ्रमात्मकमानसानुभवरूपत्वमेव प्रदर्शितम्। यच्च "अतीतज्ञाने"त्यादि "अनुभूतवस्तुस्फुरणे" त्यादि च आकरवचनं, तत् स्वप्नानुभूतवस्त्वनुसंधानात्मकं स्वप्नस्यान्ते भवं स्वप्नान्तिकं नाम ज्ञानमभिप्रेत्यैवेति बोध्यम्॥

पुटम् १३७ (श. सं.) – 'पूर्वावस्थानभिन्नावस्थानाश्रयत्वप्रकारककृतिनिरूपितविषयताविशिष्टवस्तुनिष्ठपूर्वावस्थानसंपादकत्वं स्थितिस्थापकलक्षणम्' इति। निरुक्तिकारप्रदर्शिताध्वगं लक्षणमिदं "स्थितिस्थापकस्तु स्पर्शवद्द्रव्येषु वर्तमानः घनावयवसंनिवेशविशिष्टेषु कालान्तरावस्थायिषु स्वाश्रयमन्यथाकृतं यथावस्थितं स्थापयति" इति प्रशस्तपादाचार्याणां वचनानुसारेण। वस्तुतस्तु पूर्वावस्थानादेः अननुगततया परिचायकमेवेदं वाक्यम्। लक्षणं तु स्थितिस्थापकशक्यतावच्छेदकतया क्रियाविशेषजनकतावच्छेदकतया वा सिद्धस्थितिस्थापकत्वजातिमत्त्वमेवेति बोध्यम्।

पुटम् १३७ (श. सं.) – 'अतीन्द्रियोऽयं नित्यगतो नित्यः अनित्यगतोऽनित्यः' इति। अयं च नित्यानित्यविभागः स्थितिस्थापकस्य पूर्वप्रदर्शितरीत्या स्पर्शवद्द्रव्यसामान्यवृत्तित्वमभ्युपगच्छतां प्रशस्तपादाचार्याणां वचनानुसारेण। यथाहुस्ते "नित्यानित्यत्वनिष्पत्तयोऽस्य (स्थितिस्थापकस्य) अपि गुरुत्ववत्"



इति। एवं च तेषां मते परमाणुगतस्य स्थितिस्थापकस्य नित्यत्वम् अवयविगतस्य तस्यैव कारणगुणपूर्वकत्वम् आश्रयनाशमात्रनाश्यत्वं च। एतद्वचनमप्रमाणीकुर्वन्तो नव्यास्तु पृथिव्यां तत्रापि अवयविन्येव स्थितिस्थापकमङ्गीकुर्वन्ति। एवं चैतेषां मते अयं गुणः पूर्वदेशविभागजनकक्रियाविशेषजन्यः उत्तरदेशसंयोगजनकक्रियाविशेषजनकश्च। एवं च तादृशद्वितीयक्रियाजननेनैव कृतकृत्यः सन् स्वजन्यफलनाश्यश्चायम् इति बोध्यम्। एतन्नवीनमतमनुसृत्यैव "कटादिपृथिवीमात्रवृत्तिः" इत्युक्तं संग्रहकारैः। कटादिरित्यादिना धनुःशाखादिपृथिव्यवयविमात्रपरिग्रहः।

पुटम् १४८ (श. सं.)–'प्रमाणप्रमेयादिन्यायसूत्रोक्तानां +++ पदार्थानां सप्तस्वेवान्तर्भावात्' इति। अयमाशयः। प्रपञ्चस्थानां सर्वेषामपि पदार्थानां निरूपणे तेषां च साधर्म्यवैधर्म्यपरीक्षायां च वैशेषिकाणामेव महानाग्रहः। तादृशसाधर्म्यवैधर्म्यज्ञानादेव मोक्षः इति तैरभ्युपगतत्वात्। यथाहुः प्रशस्तपादाचार्याः "पदार्थानां साधर्म्यवैधर्म्यतत्त्वज्ञानं निःश्रेयसहेतुः" इति। नैयायिकास्तु पदार्थविशेषाणां तत्त्वज्ञानमेव निःश्रेयससाधनमिति वदन्ति। तथा च ते न पदार्थसामान्यनिरूपणे प्रवृत्ताः, अपि तु तेषामेव सद्विधानां निरूपणे, येषां तत्त्वज्ञानात् साक्षात् परंपरया वा निःश्रेयसाधिगमः। तथाचोक्तं टीकाकृद्भिः "त एते प्रमाणादयः सद्भेदाः निःश्रेयसोपयोगिनः, न गङ्गावालुकादयः; तस्मात् सन्तः प्रमाणादयः षोडशधा लक्षिताः परीक्षिताश्च, न गङ्गावालुकादयः; सन्तोऽपि निःश्रेयसानुपयोगात्।" इति प्रमाणप्रमेयेत्यादिप्रथमसूत्रव्याख्यानावसरे। एवं च गौतमोपदिष्टानां प्रमाणादीनां सद्विशेषाणां पदार्थसामान्यं निरूपयता कणादमुनिना उपदर्शितेषु सप्तपदार्थेषु अन्तर्भावः संभवत्येवेति।

॥ इति श्रीशङ्करनारायणेन कृतं तर्कसंग्रहशक्तिसञ्जीविनीटिप्पणीपरिशिष्टं संपूर्णम्॥

कृत्या शङ्करनारायणाख्यस्य मम चानया।
प्रीयतां गुणशीलस्थः श्रीनिवासः पिताऽनघः॥

---

# APPENDIX II

## A INDEX – SUBJECTS

## B. INDEX – AUTHORS





## C. INDEX – WORKS

## D. INDEX – *NYĀYAS, NIYAMAS etc.*

## E. INDEX – *PRATYAYĀRTHAS*







---

# ERRATA

| पृष्ठम् | पङ्क्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ४ | १८ | महात्संनः | महात्मनः |
| ६ | २४ | ध्यानमयः | ध्यानमर्थः |
| ७ | २४ | दव्य° | द्रव्य° |
| ९ | ९ | °व्याकम् | °व्याप्यम् |
| " | १६ | °समवाधान° | °समवधान° |
| " | २४ | किमय° | किमर्थं° |
| १९ | २५ | °त्वाच्छिन्न° | °त्वावच्छिन्न° |
| २६ | १८ | °निष्ठाधयता° | °निष्ठाधेयता° |
| " | २४ | °स्वमवायि | °स्वसमवायि° |
| २२ | १४ | °पादनम् | °पादानम् |
| २५ | १२ | अश्रत्वमर्थः | आश्रयत्वमर्थः |
| २७ | ९ | स्पर्शवद्विविशेष° | स्पर्शवद्विशेष° |
| " | १३ | °प्रह्यत्वात् | °ग्राह्यत्वात् |
| २८ | १२ | निरूपिताकारण | निरूपितकारण |
| " | १८ | न्यहार | व्यवहार |
| " | २५ | °प्रयो | °प्रयोगे |
| २९ | ३ | °भयत्वादित | °भयत्वादिति |
| ३० | २४ | अधिकारण° | अधिकरण° |
| ३१ | ६ | सेख्यादि° | संख्यादि° |
| ३२ | १२ | °मात्रह्याः | °मात्रग्राह्याः |
| ३३ | २५ | °भावत् | °भावात् |
| ३८ | १८ | अयमेकः, इत्या- कारक° | अयमेकः, इमौ द्वौ इत्याकारक° |